# SRIVATSACHARITAM

*(MAHAKAVYAM)*




BY


PUNDIT NOBIN CH VIDYARATNA,

*Senior Prof of Sanskrit, Metro Institution, Calcutta*



N. L. Chatterji,

Publisher & Book-seller,

*64, College Street, Calcutta.*

*Price Re 1/4 as*

# श्रीवत्सचरितम् ।



## मङ्गलाचरणम् ।

निःसङ्गे पुरुषेऽप्यहो प्रसवजं कष्टं विना या स्वयं
विश्वं स्थावरजङ्गमात्मकमिदं गर्भाद्दते सूयते ।
मातुङ्गाद्रिपयोधरप्रस्रुतया या ततः* पयोधारया
नित्यं रक्षति, सा† महाद्भुतकृतिः पायादपायाच्च वः ॥

कविदोग्धृभिरन्वहं यथेच्छं
परिदुग्धापि न या तथैव भाति ।
जयतात् ननु सा हि सूक्तिधेनुः‡
रुचिरा गोः सुचिरं विशुद्धवर्णा ॥

विधिहृते स्वजने भृशमाकुलं
जनमभिप्रतियातुमलं नु कः ?
कविहृते तु यदा विलपत्यसौ§
उपसरत्यमुमेव जनो¶ मुदा ॥

विलपति श्वसिति स्वयमाकुल-
स्त्यजति वाष्पजलं सहते व्यथाम् ।
तदपि सोऽनुभवत्यतिमात्रकं
सुखमहो कविकर्म विलक्षणम् ॥

---

* ततं विश्वम् । † सा शाङ्करीका प्रकृतिः ।
‡ सूक्तिरूपस्य दुग्धस्य धेनुः । § असौ कविहृतेऽजनो,जनः ।
¶ जनः श्रोतृवर्गः ।

कविस्मृति ननु दुःखनिदानतः
समनुभावयितुं वद कः क्षमः ।
सुखमतो विधिशक्तिजयी कवि-
चिरमयं जयतात् जगतीतले ॥

---

## · प्रथमः सर्गः ।



आसीत् पुराशेषनरेशमौलि-
रत्नांशुभी रञ्जितपादपद्मः ।
श्रीवत्स इत्यद्भुतपुण्यकीर्त्तिः
प्राग्देशराजः सुगृहीतनामा ॥ १ ।

यः सौख्यसुप्तां वसुधां समग्रा-
मग्रान्तमेकेन भुजेन बिभ्रत् ।
शेषं जहासेव शिरःसहस्रै-
र्गुरुश्रमैस्तां दधतं सकम्पाम्* ॥ २ ।

अहो नगादीन् धरतीति पृथ्व्या
यो विस्मयः प्रागुदपादि लोके ।
अपाकरोत् वीतकरस्तमेक-
करार्पितचौर्विरसौ नृपालः† ॥ ३ ।

शरण्यमासन्नमनन्यरक्षो
विपन्न एनं व्यसने सखेति ।

---

* य श्रीवत्सः सौख्यसुप्तां निरुपद्रवामित्यर्थः समग्राम् समस्तां वसुधां धराम् एकेन भुजेन हस्तेन अग्रान्तं लीलया बिभ्रत् धारयन् गुरुश्रमैः परिश्रान्तैः शिरःसहस्रैः फणासहस्रैः सकम्पां (भूमिकम्पसहिताम्) तां धरां दधतं धारयन्तं शेषम् अनन्तदेवम् जहासेव उपहसितवानिव इत्यर्थः ।

† अहो नगादीन् अचलान् पर्वतादीन् धरति बिभर्त्ति इति एवंविधः यः विस्मयः [illegible] राजचक्रान्यः इत्यर्थः एककरार्पितचौर्विः एकहस्तधृतभूभारः असौ नृपालः श्रीवत्सः तं विस्मयम् अपाकरोत् निरस्तवान्, पृथिव्यपेक्षया अस्य धारणमधिकमिति [illegible] इति भावः ।

रक्षासु शिक्षासु विशेषदक्षं
  पितेति मेनेऽपितृकः प्रजासु* ॥ ४ ।
समर्थिभावात् पुरुषाः प्रपन्नाः
  वदान्यमन्यं नहि जातु याताः ।
परोपभोगाय महान्ति यस्मात्
  ददौ फलानि द्रुमलीलयासौ† ॥ ५ ।
दिद्माच कश्चित् प्रणयी‡ न तस्मा-
  सूना§, क्षितिः स्वस्तिमतो ततोऽभूत् ।
सा प्रार्थना चेदमविघ्नदेनां
  न जातु दाता व्यहनिष्यदेषः ॥ ६ ।
पूर्णे धनैः कोषगृहे न तावान्
  वदान्यवर्य्यस्य¶ बभूव तोषः ।
पात्रार्पितैस्तैः खलु तत्र रिक्ते
  यावानभूत् चित्तविकाशहेतुः ॥ ७
नाभूत् हरस्येव भुजङ्गसङ्ग॥
  स्तस्य क्षितीशस्य महोदयस्य ।

---

* प्रजासु मध्ये धनन्यरस्य आरम्भात्तरत्वेन विपदो जात एव नृप व्यासन्नस विश्वस्त आरक्षस्‌ रक्षक व्यसन विपत्पाते सखील मेन, अपितृक पितृशून्य एव रक्षासु शिक्षासु विशेषदक्ष पितेति मेने ।

† यथा द्रुम स्वार्थपरतामुन्य आपरितोष फलानि ददाति, तथायं यथा कामम् अर्थिभ्य फलानि अर्थान् धनानि ददौ, तेन अर्थिनाम् अन्यवदान्योपगमन निष्प्रयोजनमभूत् इति भावः ।

‡ प्रणयी याचक । § असूना प्राणानाम् ।

¶ वदान्यवर्य्यस्य श्रेष्ठस्य दातु । ‖ भुजङ्ग सर्प षाटुकारश्च ।

किन्त्वेष आसीत् स इव प्रलीन-
कामः सदा भूतिविभूषितश्च* ॥ ८ ।
द्विजाश्रयो† वृक्ष इवायमासीत्
पद्मालयोऽभूच्च‡ यथा तडागः ।
तेजोनिधि § सूर्य्य इव प्रकामं
किन्त्वेष नासीत् करतप्तभूमि ¶ ॥ ९ ।
अजय्यशक्तौ रिपुभिर्जितद्विषि
क्षितीश्वरे तत्र च शासति क्षितिम् ।
भयं प्रजानां परलोकतः परं||
परार्थलाभे च परं विचिन्तनम् ** ॥१० ।
धनुःषु कौटिल्यमरुन्तुदत्वं
शरेषु, तैक्ष्ण्यं तरवारणेषु ।

---

* भूतेः भस्म सम्पत्तेः । हरः भुजङ्गमङ्गलः धातुकारवेष्टितः अयं राजा न तथा इत्यस्य हरात् उत्कर्षः, हरः सपत्नीकः इति समाधानम्, हरः प्रलीनकामः भस्मीकृतमदनः अयमपि जितकामः, हरः भस्मभूषितः अयं सम्पत्शोभी इति साम्यम् ।

† द्विजः पक्षी ब्राह्मणश्च । ‡ पद्मानाम् कमलानाम्, पद्मायाः लक्ष्म्याः ।

§ तेजः किरणः प्रतापश्च ।

¶ करेण किरणेन राजकरेण च यथा उत्तापिता उत्पीडिता च भूमर्येन तादृशः ।

|| परं केवलं परलोकतः स्वर्गादिलोकात् नतु शत्रुलोकात् ।

** परं केवलं परमार्थलाभे नतु परधनलाभे । शत्रुलोकात् भयम् इति राज्ञो निन्दा, वैरकालात् भयम् इति स्तुतिः, परस्वलाभार्थे चिन्ता इति निन्दा, परमार्थं साधायम् इति स्तुतिः ।

सत्येषु नित्यं परायणत्वं
सन्धासु चासीत् दृढता निकामम्* ॥ ११ ॥
शिरांस्यमित्राः प्रथमं रणाङ्गने
व्यनीनमन्नेव ततः शरासनम् ।
जयश्रिया कार्मुकटंकृतिश्रुतेः
समालिलिङ्गे ध्रुवमेव साध्वसात्† ॥ १२ ॥
विपक्षनारीवदनारविन्द-
चन्द्रोदयो यो बहुलेऽपि पक्षे‡ ।
मित्रोदयो§ मित्रविलासिनीनां
निरस्तनिःशेषतमस्ततिर्यः¶ ॥ १३ ॥
"एकातपत्रं जगतः प्रभुत्वं"
काष्ठान्तिमा|| लौकिकसम्पदां हि ।
आशा**, नृपो लब्धुमचेष्टतासौ
अध्यात्मसुत्कर्षमनन्यचेष्टः†† ॥ १४ ॥

---

* यस्य शासनकाले लोकानां धनुषि न तु मनसि कुटिलता, शरेषु न तु वचनेषु मर्मघातित्वम्, खड्गेषु न तु लोकचार्ये तीक्ष्णता, समरचक्रे न तु दुष्कार्य्य साधने अभिनिविष्टात्मता, प्रतिज्ञायां न तु दुष्टाभिप्राये दृढता आसीत् ।

† जयलक्ष्मीः लीलात् धनुष्टङ्कारश्रवणमात्रेण रणाङ्गने भयभीतेव एनम् आलिङ्गितवती, तेन धनुर्नमनात् प्रागेव शत्रवः शिरः नतं चक्रुः अर्थात् शरणं ययुः ।

‡ बहुले कृष्णपक्षेऽपि का कथा शुक्लपक्षे । § मित्रोदय सूर्य्योदय ।

¶ निरस्तानि शेषाणि तमांसि अन्धकारराशि दुःखराशिश्च येन तादृशः ।

|| [illegible]

** सीमा वा काष्ठा आशा [illegible]

†† अध्यात्मसुत्कर्षे—अध्यात्मविषयिणीं काष्ठाम् ।

पत्नी हि धर्माचरणे प्रधानं
सहाय# इत्येव जितेन्द्रियोऽसौ ।
काञ्चित् ग्रहीतुं यतते स्म राजा
स्वेष्टैर्गुणैस्तैः† समलङ्कृता ताम्‡ ॥ १५ ।
अस्तोन्मुखे संहृतरश्मिजाले
रवौ, प्रवाति श्वसने च मन्दम् ।
विहर्तु कामः प्रविवेश रम्य-
मुद्यानमेको जितनन्दन § सः ॥ १६ ।
सुगन्धिभिस्तत्र विचित्रपुष्पैः
रम्येऽतिसेव्ये परितो भ्रमन्तम् ।
वर्षीयसी काचिदुपेत्य नारी
हारीति ¶ वाक्यं तमुवाच नम्रा ॥१७ ।
अस्त्यत्र कश्चित् सुगृहीतनामा
"राजा प्रजारञ्जनलब्धवर्णः" ।
विचित्रवीर्य्यः खलु चित्रसेनो
नामाभिरामः स्पृहणीयकीर्त्तिः ॥ १८ ।
चिन्तेति चिन्तामणिनापि ॥ देव !
सुदुर्लभालौकिकसौकुमार्य्या ।

कन्यास्ति धन्या ननु तस्य कन्या-
ललामभूता ललनागुणौघैः* ॥ १९ ।

तस्या विधातुः किल मुख्यसृष्टेः
अवेहि राजन्नुपमातरं माम् ।
यदर्थमत्रास्मि समागताहम्
अभ्यर्थये तच्छ्रवणावधानम् ॥ २० ।

दिने दिने तद्वपुरीक्षमाणा
प्रक्षीणलावण्यमचिन्त्यहेतु ।
चिन्तामगाम्, नाभवदं कुमारीं
जिज्ञासमाना विकृतेर्निदानम् ॥ २१ ।

सखीजनप्रार्थनया विना ते
क्रियासु वत्से ! न कथं प्रवृत्तिः ?
यतस्त्वदो मौक्तिकवच्च शुक्तेः
दृष्टेः कथं वाविरतं जलं ते† ॥ २२

मया परोक्षं निपुणं निरीक्ष्य
सख्यात् च्युतं ते हृदयं न्यबोधि ।
निगूहः‡ मा चित्तविकारहेतुं
प्रसीद वत्से ! वद पुत्रि ! सर्व्वम् ॥२३ ।

---

* लज्जाभूषणत्व गृहकर्म्मपरत्व पत्येकनिस्पृहत्वादयो ललनागुणाः ।

† यथा शुक्तिकोषात् ( झिनुक ) निरन्तरमौक्तिकानि पतन्ति, तथा तव दृष्टे अश्रुव कथं वाष्पविन्दव पतन्ति ।

‡ मा निगूढ़ विकारहेतोर्गोपन मा कुरु ।

निर्बन्धपृष्टापि यदा न मे सा
मनोगतं किञ्चिदुवाच बाला ।
तदा तदीयां चतुरां वयस्यां
न्ययोजयं तत्त्वनिरूपणार्थम् ॥ २४ ॥

दिनेषु गच्छत्सु सखी तदीया
करे नु मे चित्रमिदं समर्प्य ।
जगाद मातर्भवदीयपुत्र्याः
निबोध चेतोविकृतेर्निमित्तम् ॥ २५ ॥

अहं तदालोक्य विषादमुक्ता
वरेऽनुरूपे बत बद्धभावा * ।
वत्सेति हृष्टा, ह्यनुरूपसङ्गे
न कस्य जायेत गुरुः प्रहर्षः ॥ २६ ॥

एतच्च तच्चित्रमिदं गृहाणे-
त्युक्त्वा च धात्री नृपसिंहहस्ते ।
समर्पयामास, सगौरवं तत्
विमुक्तबन्धश्च ददर्श राजा ॥ २७ ॥

उद्भासितं तूलिक्रियात्मरूपं
संवादि सर्वावयवेषु दृष्टा ।
किं दृष्टपूर्व्वोऽस्म्यनया कदाचित् ?
न चित्रमेवं हि विना विलोकम् ॥ २८ ॥

---

* बद्धभावा अनुरागवती ।

इयञ्च मे दृष्टिपथं गतेति
न स्मर्य्यते चिन्तयता च कामम्।
इति प्रतर्काकुल एव राजा
यदा परिच्छेदविमूढ़ आसीत्॥ २९।
तदा तया तत्र वयस्यया च
प्रश्नोत्तरं श्लोकमयं निबद्धम्।
अधीत्य तत्पाठनिबन्धनस्य
हर्षस्य काष्ठां परमां प्रपेदे॥ ३०।

प्रश्न।

कस्येयं कृतिनः सखि! प्रतिकृती रम्या प्रकृत्या त्वया
साकाङ्क्षं मुहुरीक्ष्यतेऽसि* विलयं यातेव यस्यामहो!

उत्तरम्।

सा पुण्या प्रकृतिः किमस्ति भुवने? यस्याः प्रतिच्छायया†
मुग्धे वास्यनयाप्यप्रतिकृतया‡, तत् पृच्छयालं सखि॥ ३१।

प्रश्न।

विस्रम्भास्पदमालिरस्मि तव, तत् किं लज्जया चेष्टसे
निह्नोतुं हृदयव्यथां सुमहतीं मह्यं§ न सह्यं हि तत्।

उत्तरम्।

याधत्ते नहि यत् श्रुतं नु हृदये संप्रत्ययं शृण्वतां
तत् तद्गुप्तिरलं भवायत¶ महते जानीहि निःसंशयम्। ३२

---

* असि त्वम् (अव्ययमेतत्)। † प्रतिच्छायया प्रतिकृत्या।

‡ अप्रतिकृतया चित्रकर्म्मणि नैपुण्याभावात् असम्यक्कृतया।

§ मह्यम् इत्यत्र कुधाद्यर्थेति चतुर्थी।

¶ तद्गुप्तिरलं महते भवाय तस्य विषयस्य गोपनम् अतिप्रचिताय मङ्गलाय अलं भवति।

"निर्बन्धो यदि ते" "यदीति च पदं मह्यं कथं रोचताम्"
"भद्रं तत् कथयामि" "युज्यत इदं ब्रूयाः" "समाकर्णय" ।
"जाने सुप्तवती गृहं प्रविशतीमद्राक्षमेकां वपु-
र्गन्धामोदितदिङ्मुखां मृदुपदां दिव्याङ्गनां कामपि ॥२३॥
निद्रालोढ़निमीलितेक्षणयुगा धात्री प्रसुप्तैव सा
द्वारं तत् पिहितञ्च, दीपनिवहं कान्त्या तिरस्कुर्वती ।
लीलानीरजपाणिरद्रुतपद मत्पार्श्वमागम्य सा
जाने गात्रमिदं स्पृशत्यविरत हस्तेन मामब्रवीत् ॥२४ ।
वत्से ! मामवगच्छ सिन्धुतनयां विष्णुप्रियामिन्दिरा
श्रीवत्से नृपतौ ममास्ति तनये ! वात्सल्यमैकान्तिकम् ।
विद्वन्मानसराजहंसमतुलोत्कर्षं* पतित्वेन तम्
राजानं वृणु, दम्पती सुखसमायोगौ चिरं नन्दताम् ॥२५।

भूमेरिवासौ च ससागरायाः
करग्रहेण† प्रसितस्तवापि ।
सव्येतरं ते ननु पार्श्वमागात्
कृतार्थयेनं शुभदृष्टिपातैः ॥ २६ ।
मधुना माघवनो वनीव‡ युक्ता
शशिना सङ्गमिता यथा त्रियामा ।

---

* यथा मानसे तदाख्यसरोवरे हंस क्रीडति तथाय राजा विदुषाम् मानसे
चित्त करणे रमते।

† करस्य तव हस्तस्य राजकरस्य च, यथायं पृथिव्या करं गृह्णाति तथा तव
करं पाणि ग्रहीतुम् उत्सुक, करग्रहेण इत्यत्र प्रसितोत्सुकाभ्याम इति तृतीया ।

‡ माघवनो वनी इन्द्रसम्बन्धिनी उपवाटिका नन्दनकाननमिति यावत ।

मिलिता भूमिभृतामुना तथा त्वं
भव वत्से जनताविनोदहेतुः* ॥ ३७ ।

यदा तथोक्त्वा परिवर्त्य वक्त्रं
व्यलोकयं तत् पुरुषाख्यरत्नम् ।
तदा सखीमे† गुरुहर्षवेगात्
नेत्रे विमुक्ते बत निद्रया मे ॥ ३८ ।

तथाज्वलद्दीपमपि प्रबुद्धा
तमोभिराच्छन्नमिवातिघोरैः ।
अदर्शमेतत् सदनं तदानीं
न तां सुरेशीं न च तं नरेशम् ॥ ३९ ।

क्षणेन मे चित्तमसौ रहोला
प्रादुद्रुवत् क्वापि, गतिं न वेद्मि।
कियच्चिरं दग्धमिदं शरीरं
चेतोविहीनं बत धारयामि" ॥ ४० ।

"आश्चर्यमेतद्धि परः परस्य
यच्चोरयत्यङ्ग ! मनो निरङ्गम् ।
अन्यत्र मत्तो न कदाचिदेवं
वादीर्वचो मा सखि ! वारयामि ॥" ४१ ।

"वक्त्रं चोरितचन्द्रकान्ति, नयने चोरौ चकोरश्रियः
पाणिः संहृतपद्मरोचिरधरयोरः प्रवालद्युतेः ।
अङ्गं यस्य परस्वचौर्य्यचतुरं सर्व्वं, स मे यन्मनोऽ
मुष्णात् तत्र किमस्ति चित्रमधुना मूढ़े! विबुद्धं त्वया"॥

---

* जनसमूहस्य आनन्दकारणम् ।    † हे सखि इमे ।

चित्रस्थपद्यानि निविष्टचित्तं
राज्ञो हि भावं पठतो विलोक्य।
सञ्जातरागोयमिति प्रहृष्टा
धात्री ददौ चित्रमथैकमन्यत् ॥ ४३।
उवाच राजानमियं विनम्रा
तस्या हि जैवाटक* ! राजपुत्त्रयाः।
जानीहि सम्यक् प्रतिरूपमेतत्
आत्मानुरूपं यदि यान्यथैनत् ॥
मतिं स्थिरीकृत्य निरीक्ष्य साधु
मनोगतं वाचि निवेशयाशु।
मन्ये ऽसि संप्राप्तविवाहयोग्य-
'दशस्तयाभूतदशा च चिन्ता॥४४,४५। युग्मकम्।
बाला निकामं त्वयि बद्धभावा
लज्जया निदेशात् गुणगौरवाच्च।
वरान्तरे वीतरुचिर्दयार्हा
नवेति तूर्णं वद कातरास्मि ॥ ४६।
निराकृतो मृत्युरसंशयोऽस्याः
सर्व्वं शुभं पाणिपरिग्रहे च।
यत् सांप्रतं संप्रति तात ! सम्यक्
विचार्य्य कार्य्यं, बहुभिः किमुक्तैः ॥ ४७।
इत्युक्तवत्यां नृपवक्त्रपद्मे
संसक्तदृष्ट्यां श्रवणाय तस्याम्।

---

जैवातृक !—हे चन्द्रवदन !

वक्तुं नृपः प्राक्रमतैवमेनां
चिन्तार्थचिन्ताकुलमानसां सः ॥ ४८ ।
उपेयिवानस्मि विवाहयोग्या-
'दशा स्वधर्म्माचरणाय वृद्धे !
प्रयोजनं मत्समयाभिजात्यैः*
नारीगुणैर्भूषितया च पत्न्या ॥ ४९ ।
सा चैत्रसेनी कमलानुकम्पा-
पात्रं तथालौकिकसौकुमार्य्या ।
तत् ब्रूहि किं तत्, ननु येन सा मे
न काम्यपाणिग्रहणानुरक्ता ॥ ५० ।
चित्रार्पिता सा मम मानसेऽस्मिन्†
हंसीव मातर्विहरत्यजस्रम् ।
चित्रं समालोकयता मयैना
न तृप्तिमायाति विलोकनस्पृक्‡ ॥ ५१ ।
प्रकृतिदर्शनमद्य तदर्शना
प्रतिकृतिर्विशतीव नृपेक्षणम् ।
क्षिपतु शंकरभाष्यवदाविलं
प्रकृतते कुरुतेऽस्य दृगञ्जनम्§ ॥ ५२ ।

---

* आभिजात्यैः—कौलीन्यैः ।

† मानसे मानसाख्ये सरोवरे मनः करणे च ।

‡ विलोकनस्य "दृष्टयाना वा" इति पाठको ६ष्ठी, पक्षे २या ।

§ कविराह अद्भुतदर्शना अद्य तत् आश्चर्य्ये दर्शन रूप प्रतिपादस्य यथा सा प्रतिकृतिः चित्रस्था चित्ररूपेण शीघ्रत्वस्य नेत्र विशतीव प्रविशतीव शंकरभाष्यवत्

कश्चित् कीटः प्रविशति यदा नेत्रमध्यं तदेतत्
कीदृक् कष्टं वद न सहते, नैव यावत् प्रयाति ।
निष्यूतेव* स्थगितदशदिक् लम्बते सा नताङ्गी
दृष्टिश्चैषा तदपि रमते निर्भरानन्दभारा ॥ ५३ ।

मरुस्थल्या लब्धा सरससलिला रम्यतटिनी,
यथा, रात्रौ मेघावृतदशदिशि प्रोज्ज्वलशिखः ।
यथा दीपस्तोष्णे दिनकरकरैस्तापितपथे
वटच्छाया यद्वत्, भवति च तथेयं मम मुदे† ॥ ५४ ।

इयं गेहे लक्ष्मीरिव चरतु मे विग्रहवती
अनिर्वाणः स्निग्धो ज्वलतु नियत दीप इव वा ।
अहोरात्र तुल्यद्युतिरिव निरङ्का विधुतनुः
सुधाधारां वर्षत्वतनुमविरामं वपुषि मे‡ ॥ ५५ ।

---

शङ्करकृता वेदान्तव्याख्येव अस्य नृपस्य प्रकृतिदर्शन विवादन्यत् वस्तुजात कपिल कृत साङ्ख्यशास्त्रं आविल दर्शनायोग्य यथाद्य प्रकुरुते विधत्ते, इयञ्चनयनं चक्षुः वैशद्यं वस्तुतत्त्वस्य सम्यक् उद्भासनं कुरुते विधत्तु हे सुहृद् ! भवती पश्यतु दृश्य ।

* निष्यूतेव—नव कीलितेव नेत्रमध्ये कीलकेन विद्धेव ।

† मरुस्थल्यां लब्धा सरसजला रम्या नदी यथा मुदे अर्थात् आनन्दाय भवति, मेघावृतदशदिशि रात्रौ सहसा लब्धः प्रोज्ज्वलशिखः दीपः यथा आनन्दाय भवति, ग्रीष्मे दिनकरकरैः तापितपथे लब्धा वटवृक्षच्छाया यद्वत् यथा आनन्दाय भवति, तथा लब्धा इयं चिन्ता मम मुदे आनन्दाय भवति ।

‡ इयं चिन्ता मे गृहे विग्रहवती शरीरिणी चिन्तादेवी भवतीयं इत्थं लक्ष्मी साक्षात् कमलादेवीव विचरतु ; अथवा अनिर्वाणः निर्वाणशून्यः नियतं ज्वलति इत्यर्थः स्निग्धः नेत्रानन्दकरः प्रोज्ज्वलशिखः प्रोज्ज्वलया शिखया अन्वितः दीप इव प्रदीपवत् नियतम् अविरामं ज्वलतु मद्गेहे आलोकं वितरतु, अहोरात्र दिवानिश

चिन्ताचिन्तास्तिमितनयनः फुल्लराजीववक्त्रः
सान्द्रानन्दक्षुभितहृदयः कण्टकाकीर्णकायः ।
एकैवेयं जननि ! जनने मूर्त्तिमानुत्सवोस्मिन्
इत्युक्त्वैवागमदनुगतो हृदयासौ निशान्तम् ॥ ५६ ।

इति श्रीश्रीवत्सचरिते महाकाव्ये चित्रगत-
चिन्तायोगो नाम प्रथमः सर्गः ।

---

गच्छति रात्रौ दिवसे च सततमास्ते चिरदा कलङ्कयुक्ता विधुतनायक चन्द्रमूर्तिरिव इव मे वपुषि गात्रे सततम् प्रवहाम सुधाधाराम् अमृतप्रवाह आवरामम् अद्याल वहतु पातयतु ।

# द्वितीय: सर्ग: ।

---

जरातुराथो जननी कदाचित्
प्रदर्शिताध्वा परिचारिकाभि: ।
समेत्य सुप्तोत्थितमात्मजं स्वं
जगाद तेनार्चितपादपद्मा ॥ १ ।

माता कथं वत्स ! विवाहदीक्षां
न कारयेत् योग्यदशे कुमारे ।
विनिन्दतीत्थं पुरवासिवर्ग:
पुरन्ध्रिवर्गश्च समन्ततो माम् ॥ २ ।

लब्धस्य ते पुण्यपरम्पराभि
र्जन्मोत्सवो वत्स ! महासमृद्धया ।
सम्भावितो नन्दितजीवलोक
स्तातेन ते पात्रविकीर्णवित्त: ॥ ३ ।

दिधीर्षुमात्मानमवेक्ष्य वत्सं
सक्रान्तबिम्बं गृहकुट्टिमेषु ।
विचेष्टमान विफलप्रयास
लब्धश्च हर्षो हसता प्रकामम् * ॥ ४ ।

---

* तेन ते तातेन वत्सं भवन्तं गृहकुट्टिमेषु सक्रान्तबिम्बम् प्रतिफलितच्छायम् आत्मानं निजदेह दिधीर्षुं धारयितुमिच्छु विचेष्टमानम् विफलप्रयास कुर्वन्त विशेषचेष्टाविधायके अज्ञातकार्यम् अवेक्ष्य हसता सता प्रकामम् अत्यर्थं हर्ष लब्धः ।

चंक्रम्यमाणं सुत ! जानुनाङ्गं*
भवन्तमारोप्य रजोविलिप्तम्।
आनन्दमोल्लसयनेन सद्यात्
उत्कण्टकाङ्गेन चिरञ्च तस्थे† ॥ ५ ॥

गृहीतविद्यस्य समस्तलोकं
प्रह्लादयन्त्या गुणवत्तया ते।
यत् सौख्यमागाच्च तदा पिता ते
वाग्वृत्तिबोध्यं नहि तत् कथञ्चित् ॥ ६ ॥

सञ्जाततारुण्यविलासराशेः
लोकोत्तरा ते ननु तेन शोभा।
प्रीत्या च विस्फारितनेत्रयुग्मं
दृष्टा तथा शक्तिरलौकिकी च ॥ ७ ॥

तयाभिषिक्तस्य च यौवराज्ये
शिरः समाघ्रातमनूनशोभम्।
नमस्यतो दिग्विजयागतस्य
गात्रं परिष्वक्तमिदं प्रगाढम् ॥ ८ ॥

वधूसमेतस्य विशुद्धकान्तेः
विधाय ते हा स्वपदे प्रतिष्ठाम्।
यदा वनं गन्तुमियेष तात !
मया समेतौ हतभाग्ययासौ ॥

---

* जानुना चङ्क्रम्यमाण बाल्यक्रीडासु ध्वनरजाखम् ( हामागुडिर प्रभृत्य )।

† तव तातेन इति शेष।

तदा सुतान्ते सगणे सगर्द्धं
  विलोकयन्त्येव चतुर्भुजास्ते।
दैत्यारिदूता ननु विष्णुलोकं
  निन्युः समारोप्य विमानमेनम् ॥९,१०॥ युग्मकम्।
अहं जराक्रुष्टसमग्रधातु-
  र्जाता समासन्नशरीरपाता।
यथाहि वत्स स्नुषया समेतं
  दृष्ट्वा म्रिये तं नु विधिं विधेहि ॥ ११।
समुद्धृतोत्तुङ्गतरङ्गबाहु
  र्बलिप्रदत्तं कुसुमं वहन्तीम्।
इरावतीं दक्षिणसिन्धुसङ्गात्
  सुकां वदेत्रे कुटिलं चलन्तीम् ॥
तदेवमेव गतगो मनोरथैः
  नयामि कालं सुत! मे स्नुषा कदा।
इयं नदीवाग्रलिलानुरागतो
  गच्छीतमाला पतिपार्श्वमेष्यति ॥१२,१३॥ युग्मकम्।
न भाति भार्य्याप्रमृते यथा वपु-
  र्विभूषितं रुचिरभूषणैरपि।
तथैव शून्यं समयेन ते गृहं
  न रम्यमाकल्पगतैर्विशोभितम्० ॥ १४।
समीक्ष्य दैन्यं मम सुतेन ते
  विनानुयेन्नं विरमायतेऽधुना।

० कामकल्पे—रहै: पूर्णै:।

असैन्श्रं स्वादयतां नवं घृते
रसानुभूतिर्यदि कीदृशी भवेत् ॥ १५ ॥

सुवासितं तैरपि तैश्च साधनैः
सुगन्धि ताम्बूलमचूर्णचर्व्वितम् ।
अजातरागं रसनेन्द्रियाय किं
कदापि किञ्चित् स्वदते च पुत्रक ! १६ ।

तदेव दुःखं ह्यनपत्यताश्रयं
वयःप्रकर्षेण समं प्रकाश्यते ।
क्रमात् भराक्रान्तमिदञ्च मानसं
प्रकम्पते क्षाम्यति चावसीदति ॥ १७ ॥

व्रजामि वैराग्यरतेपि चेतसो
निवृत्तसुखत्व विषयोपभोगतः ।
यदा तदारोहति मत्स्मृतिं तदा
विशीर्य्यतीवाङ्गमहो नु दुःस्मरम् ॥ १८ ॥

मया विना का नियतं सुधाम्बुधौ
वसन्त्यपि क्षाम्यति तृष्णया भृशम् ।
तुषारसंघातशिलाशयापि का
कुकूलरागाविव पच्यतेऽनिशम् ॥ १९ ॥

उपान्तसंमीलितलोचनाम्बुजं
विचुम्ब्यमानः स्खलदक्षरं वदन्
प्रसारिताभ्यां जनकेन सादरं
प्रवेष्टकाभ्यामभिनन्दितागमः ;

क्षणं तदङ्कापतने कृतोद्यमः
　निवृत्य मातुर्धृतकन्धरः क्षणम्
प्रलोभ्यवस्तुप्रणयी पुनः करं
　प्रसारयन् तद्ग्रहणे हृताग्रहः ;
विवर्त्तितग्रीवमपूर्णवासनो
　विलोकयन् मातृमुखं चलेक्षणः
तया हृशा सस्मितनोदितः क्षणात्
　नतोर्द्धकायस्ततबाहुयुग्मकः ;
प्रसृप्तपादो जननीभुजान्तरं
　शशीव पूर्व्वाद्रिशिरः परित्यजन्
तमो नुदन् वक्षसि पुण्यशालिनः
　सुतः प्रहृष्टो नभसीव धावति* ॥२०-२३। कलापकम् ।

---

* यथा शशी प्रसृतपाद. विस्तृतकर तमो नुदन् अन्धकार नाशयन् पूर्व्वाद्रि-शिर उदयाचलशिखर त्यजन् विमुञ्चन् नभसि आकाशे धावति तत्तुल्य पतात, तथा सुत. पुनः प्रसृतपाद चालितचरण. जननीभुजान्तर मातुः वक्षःस्थल त्यजन् तम दुःख नुदन् निरवर्त्तयन् पुण्यशालिन. पितुः वक्षसि धावति तत्तुल्य धावति (कथंभूत. सन् ?) उपान्तसमीलितलोचनाम्बुज यथा स्यात्तथा विचुम्व्यमान पित्रा कृतमुखचुम्बन ,(पुन ?) स्खलदक्षर वदन्, (पुन ? जनकेन प्रसारिताभ्या प्रवेष्टकाभ्या बाहुभ्यां सादर अभिनन्दितागम. मत्क्रोडम् एहि इति सदर्प वाञ्छिताङ्कधारण, (पुन कथंभूत. ?) क्षण तदङ्कापतने कृतोद्यम, (पुन.?) क्षण निवृत्य मातृ. धृतकन्धर, (पुन ?, प्रलोभ्यवस्तुप्रणयी पित्रा दाप्यमान प्रलोभ्यवस्तु ग्रहीतुमिच्छन् कर प्रसारयन्, (पुन ?) तद्ग्रहणे हृताग्रहः पित्रा अपसारितेऽवस्तुनि विफलप्रयास, (पुन ?) अपूर्णवासन अपूर्णकाम: अतएव चञ्चलचक्षुः विवर्त्तितग्रीव मातृमुख विलोकयन्, (पुन ?) तया मात्रा हृशा नेत्रसङ्केतेन सस्मित नोदित अङ्क गच्छ इति सहास प्रेरित , (पुन. ?) नतोर्द्धकाय.नम्रीकृतपूर्व्वकाय. ततबाहुयुग्मक. प्रसारितबाहुद्वय ।

हताप्यशेषैः परितो जनैरियम्
वधूकृते मे न पुरी विराजते।
ध्रुवादिनक्षत्रसमाकुलाप्यसा-
निशा विना चन्द्रिकया तमस्विनी ॥ २४ ।
किमित्यकाण्डे ननु वत्स ! सहसो
सञ्जातविद्वेष इवासि* लच्यसे ?
कथं नु पाणिग्रहणे न सम्मतिं
ददासि ? किं ते वद हृत्तमात्मज ! २५ ।
वदोत्तरं न प्रतिपद्यसे कथं
विवाहदीक्षामधिकृत्य मन्त्रिभिः
कृतासु पृच्छासु ? कथं तवेदृश
शरीरसाद' क्रमशः प्रकाश्यते ? २६।
त्वदेकपुत्रा च जरातुरास्म्यहं
कथं नवा मन्मथमोघमेषणम्।
इमा त्वदाकस्मिकचित्तविकृति
भजन्ति दुःखं प्रसमीक्ष्य मन्त्रिणः ॥ २७
इति ब्रुवत्या मृदु मातरि श्रिया
विनम्रवक्त्रे च सुते निरुत्तरम्।
नृपस्य धात्री जरती पुरोधसा
तदैव चित्रं समुपानयत् द्रुतम् ॥ २८ ।
ततः परं मन्त्रिवराः प्रहृष्टाः
समागतास्तत्र, गृहीतपूजाः

* वर्ष—सम।

निषेदुरद्धे परिवह्ररम्ये
  वेत्रासने भृत्यजनोपनीते ॥ २९ ।
सम्बोध्य धात्री नृपमातरं तत्
  चित्तं प्रसार्य्यारभताभिधातुम् ।
अस्त्यत्र कश्चित् किल चित्रसेन-
  नामा नृपः शुद्धविशालवंशः ॥ ३० ।
तस्यात्मजेयं, प्रतिरूपमेतत्
  यस्याः समाकर्षति पश्य नेत्रम् ।
वत्स प्रतिलिप्त वरीतुमेनां
  स्वप्ने समादिष्टवत सिन्धुकन्या ॥ ३१ ।
पुत्रोऽयमस्यामिति बद्धभावः
  तदेतयोर्योग्यसमागमाय
यतध्वमस्यासमयातिपात-
  क्षमः* मनस्ताद्दृशमेव तस्याः ॥ ३२ ।
तस्या निगद्येति निवृत्तवाचि
  धात्र्यां पुरोधःप्रभृतास्य सर्व्वे ।
'आयास्य एष ह्यनुरूपसङ्गः'
  इत्येकवाक्यं मुदिता विवव्रुः ॥ ३३ ।
लग्ने विशुद्धे च तिथौ शुभायां
  तयोर्द्वयोः काङ्क्षित एव योगः ।
उत्कण्टकः स्वेदजलप्रसिक्तः
  सम्पन्न आसीत् परया समृद्ध्या ॥ ३४ ।

*॰ असमयपातक्षमम्—कालक्षेपासहिष्णु मन इत्यस्य विशेषणम् ।

रूपानुरूपां न पतिश्च पत्नीं
प्रापेति मेने हि वधूर्नवोढ़ा।
विरूपमेकान्तमभव्यमीशं
पत्नी गतेत्येव वरोप्यमंस्त ॥ २५ ।
विभूषयत्येव वरो यथा वधूम्
अलकरोत्येव तथा वधूर्वरम्।
परस्परालकरणात् तदा समाम्
अमंस्त ता भूषणभूयता जनः ॥ २६ ।
हरमिव गिरिकन्या सिन्धुपुत्रीव विष्णुं
मधुमिव वनभूमिर्वारिद चञ्चलेव।
शशधरमिव चित्रा रोहिणी वा सुकेशी
नृपतिमिममुपेता राजते राजबाला ॥ २७ ।
इति समगुणयोगप्रीतिमासाद्य पौरे-
ष्वनुदिशमुपयातेष्वेवमेवं वदत्सु ।
बहुविधबहुमूल्यैर्वर्द्धितश्चौत दायैः*
नृपतिरगमदन्तः कान्तया चिन्तया च ॥ २८ ।

इति श्री श्रीवत्सचरिते महाकाव्ये चिन्तापरिणयो
नाम द्वितीयः सर्गः ।

---

* जामाते दर्शनै ।

## तृतीयः सर्गः ।

लौहदण्डहतिभिः सुरचितं
शक्रकाननमिवापरं चितौ ।
अम्बिरावतिः* विशालमद्भुतं
रुचिरं कुसुमकाननं बभौ ॥ १ ॥
यस्य दर्शकमनोऽनुरञ्जिनो
निर्म्मितौ रुचिरलौकिकौ शुचिः ।
आनुकूल्यमभजत् परस्परम्
तादृशञ्च नरशिल्पकौशलम् ॥ २ ॥
यत्र कापि हतिलम्बिनी लता
श्यामला कुसुमचारुहासिनी ।
आगते नमति यत्र मारुते
धीरमुन्नतशिरा गते पुनः ॥ ३ ॥
उत्पतत्पतदलिव्रजा परा
वायुकम्पितमनोज्ञपल्लवा ।
दीव्यतीव शिशिकान्तिकन्दुकैः
सस्मितं निपतति पुष्पजालके ॥ ४ ॥
चित्रचारुकुसुमैश्चिताऽसिता
धारयत्युपवनश्रियोऽपरा ।

* इरावती नाम नद्यास्तीरे ।

श्यामलातपविकीर्णचित्रिता-
  च्छादनद्युतिमसौ विकम्पिता* ॥ ५ ।
सौरभाकुलमधुव्रतालयो
  मण्डलाकृति निबद्धपंक्तयः ।
यत्र काचमयविष्टरस्थिताः
  भान्ति पुष्पतरवः क्वचित् क्वचित् ॥ ६ ।
पल्लवस्तबकसंकुलद्युतिः
  सौष्ठवेन रुचिरो निसर्गतः ।
पश्य भाति नितरां तदन्तरे†
  शोक एष विहरद्विहङ्गमः ॥ ७ ।
कर्णमूल इव किञ्चिदादरात्
  गुञ्जमालपितुमस्य मालती ।
धीरसुव्रतलताततिः क्रमात्
  पश्य कण्ठमुपगृह्य कर्षतिः‡ ॥ ८ ।

---

* चित्रचारुकुसुमे नानावर्णपुष्पे चित्रा श्यामा कलिता कृष्णवर्णा विकम्पिता वायुचालिता असौ अपरा लता उपवनश्रिय उपवनस्य अधिष्ठात्र्या देव्या श्यामलातपविकीर्णचित्रिताच्छादनद्युति श्यामलं कृष्णवर्णम् आतपे रौद्रे विकीर्णं शोधनार्थं प्रसारितं चित्रितं कारुकार्यमनोहरं यत् आच्छादनं वाराणसीचेलवस्त्रं तस्य द्युतं शोभां तद्युतिमिव द्युतिमियं धारयति बिभर्ति स्वयं वनदेव्या तादृशवस्त्रवत् शोभते ।

† तेषां पुष्पतरूणां मध्यस्थली ।

‡ मालती मालतीलता नायिकाच धीरं शनैः शनैः सुव्रतलतातति सुव्रता नवरपिता लतावलिः मनोज्ञासमूह नायिकाय यथा तादृशी सती अस्य अशोकस्य नायकस्य च कर्णमूले किञ्चित् गुञ्ज रहस्य आदरात् आलापयतिमिव क्रमात् कण्ठदेशे ग्रीवाञ्च उपगृह्य धृत्वा आलिङ्गय च कर्षति नमयति पश्य ।

मत्समचमियतो विलज्जते-
त्युयरीपवगतोऽतिमुग्धकः ।
यायुनेरितदलच्छलादिमां
तर्ज्जयन्निव विलोक्यते चपम्* ॥ ८ ॥
यूथिका च नितरामपत्रपा
भृङ्गगुञ्जितमिषेण मत्सखम् ।
गीतमारभत एव, किं कदा
लज्जति गणिकयेदृशी वियोगि* ॥ १० ॥
भ्रूकुटीं प्रबलभङ्गरूपिणीं
कुर्वती कुलभयापरा लता ।
कर्षतीव भुजवल्लिवेष्टितां
मल्लिकां विगदमन्दहासिनीम् ॥ ११ ॥
स्मतायतानैः प्रतिपिध्यमान-
रविप्रवेशो रुचिरावलोकः
उत्कन्धरं श्यामतया मयूरैः
विलोक्यमानो घनगर्द्धिधिसैः ;
मध्यस्य तापस्य महानिवारि
विनोदनस्थानमिवाधिदेव्याः

---

नैसर्गिको यत्र सुखप्रवेशः
क्वचिन्निकुञ्जः प्रतिभाति मञ्जुः ॥१२,१३। युग्मकं

अथ न ते दृष्टिपथ प्रयातः
नूनं नु वासन्ति* । शुभे । गुणज्ञे ।
तेनैव तस्या खलु दण्डकायाम्
अद्यापि वासव्यसनित्वमेपि ॥ १४ ।

समानशीर्षैर्मसृणै समन्तात्
सन्नद्धकच्छा निविडैश्च शादैः
नानाविधैः स्निग्धमनोज्ञपर्णैः
सुसेव्यतीरा फलपुष्पवृन्दैः ,
तीर्थैर्महद्भिः† सुकरावगाहा
रम्या सपद्मामलजीवना‡च
राज्ञीव काचित् सुलभामृतर्द्धिः §
यत्रास्ति चैका रमणीयवापी ॥ १५,१६ । युग्मकम्।

अनुत्तरङ्गे मुकुराच्छतोये
विभाति यस्या प्रतिबिम्बमाला ।
जानीमहेऽध:शिरसो द्रुमास्त
ज्जलं प्रविष्टा परिमातुकामा ॥ १७ ।

---

* दण्डकारण्यस्य अधिष्ठात्री देवीति भवभूतिः ।

† तीर्थैः—सोपानैः सुखविनिपातादामय ।

‡ अथवा अमलजीवनाथ सदर्पेका सलक्ष्मीका च, निर्मलजला चकलइ भारवा च ।

§ सुलभामृतर्द्धिः—सुलभजला सुलभसम्पद् ।

कठोरनादेन मरालराजो
वित्रासयन् कच्छचरीं बलाकाम् ।
वितत्य पक्षौ नतकण्ठनालः
पतत्यसौ द्राक् सलिले सशब्दम् ॥ १८ ।

तत्पातसञ्जाततरङ्गरेखा
विशृङ्खलान्दोलितबिम्बपङ्क्तिः ।
अकाण्डविक्षोपहतेन धत्ते
तुलां कवेश्चित्तपटेन वापी ॥ १९ ।

कलं सशब्दोच्छलदच्छवारिः
उत्सस्य यस्मिन् कृतकस्य नादम् ।
उत्कर्णमाकर्ण्य कुरङ्गशावो
बध्नाति शष्पप्रणये* न चित्तम् ॥ २० ।

क्वचित् शयाना करटेन देहात्
व्याकृष्टकीटा सुखमीलिताक्षी ।
उचस्तकार्कं परिभिन्नगात्रं
लुठत्यसौ पश्य मृगी धरण्याम् ॥ २१ ।

सर्पाकृतिं मारुतनर्त्तमानम्
उद्भिज्जभेदं क्वचिदीक्षमाणः ।
भुजङ्गवेदं कृतघातयत्नो
आक्रान्तसौ भाति नीलकण्ठः† ॥ २२ ।

स्वयं सुरुच्येव शरीरवल्ला
निर्दिष्टनिर्म्माणदिशोपदेशः ।

---

* शष्पप्रणये घासप्रार्थनायाम् सहचरे द्रष्टव्य । † नीलकण्ठ – मयूर. ।

अन्यत्र मेरोरिव वैजयन्त:
सहस्रनेत्रेचितकारुकार्य्य:* ;
सुकारुकार्य्यै: परिवृत्तिमियो:
प्रमाणशुद्ध्या रुचिरावलोक:
महोज्ज्वलो दीपितदिग्विभागो
मूर्त्तो यशोराशिरिवास्य भर्त्तु: ;
विज्ञानजैर्भूपणवस्तुजातै-
र्विशोभमानो नयनाभिरामै:
गर्व्वैकहेतु: स्थपतेश तत्र
प्रासाद एको नितरां विभाति ॥२३-२५॥ विशेषकम् ।

अन्त:शोभां सुलभकुतुका द्रष्टुकामेव यान्ती
सन्ध्या यस्य प्रतिहतगति: काचरुद्धे गवाक्षे ।
विद्युद्दामस्फुरणरुचिरा बालिका प्रस्खलन्ती
धृत्वार्केण प्रविततकरेणाङ्कमारोप्यते द्राक्† ॥२६॥

---

* वैजयन्त —इन्द्रप्रासाद   सहस्रनेत्रेचितकारुकार्य्य —यथा वैजयन्त सहस्रनेत्रेण इन्द्रेण ईचित कारुकार्य्य यस्य तादृश तथायं श्रीवत्सप्रासाद सहस्रैश नेत्रै ईचितम् कारुकार्य्य यस्य तादृश ।

† सुलभकुतुका सिद्धत्वात जातकौतूहला अतएव अन्त शोभाम् अन्त अभ्यन्तरस्य गृहाभ्यन्तरस्य शोभां सौन्दर्य्यं द्रष्टुकामेव अवलोकयितु जातस्पृहेव अतएव यान्ती तद्दर्शनार्थं धावन्ती यस्य प्रासादस्य काचरुद्धे काचेन आवृते गवाक्षे वातायने प्रतिहतगति वारितप्रवेशा विद्युद्दामस्फुरणरुचिरा विद्युद्दामस्फुरणवत् रुचिरा मनोज्ञा प्रस्खलन्ती सुस्खलितपदा पतनोन्मुखी बालिका बालस्वभावसम्पन्ना सन्ध्या (उषाराग) प्रविततकरेण विस्तारितकिरणेन विस्तारितहस्तेन च अर्केण सूर्य्येण पित्रा च द्राक् झटिति धृत्वा गृहीत्वा अङ्कम् क्रोडम् आरोप्यते नीयते । यस्य गवाक्षावरण काचे उषाराग प्रातःकालीन विचित्रा प्रभाम् उत्पाद्य अथ विद्युत

अथैकदासावभिषेककाले
रोधोलताच्छन्नतया सुगोते ।
विहर्तुकामः सरसीजलेऽगात्
श्रीवत्सराजो वनितासहायः ॥ २७ ।

क्रमेण सोपानपथावतारात्
शिञ्जानभूषा सुकवेर्यथा वाक् ।
चिन्ता पदक्षेपमनोरमा ताम्
उत्त्रस्तहंसां सरसीं चकार ॥ २८ ।

जल विगन्त्या च तया सहावम्
अभ्युक्ष्यमाणः करमुक्ततोयैः
करो करिण्येव रराज भूपः
आनन्दसन्दोहनिमीलिताक्षः ॥ २९ ।

तूर्पेण तुन्नैः सलिलैश्च चिन्ता
विताडिताक्षी परिवर्त्त्य वक्त्रम् ।
क्षणं रराजाम्बुदवारिधारा-
हतावभुग्नाम्बुजपद्मिनीव ॥ ३० ।

चिन्ता गुरुश्रोणिपयोधरत्वात्
आत्मानमुद्वोढुमशक्नुवाना ।
पतोयया सा चषमेषु बाला
सतला तस्मात् प्रवलात् निवृत्ता ॥ ३१ ।

---

रूरवत् विकसति पश्चात् सूर्ये समयोदिते स राम. निवर्त्तते इति मुक्तार्थः । यथा कश्चित् बालिका पिच्छिले पथि स्खलितपदा पतन्त्यपि पितादिना झटिति समेत्य कर ग्रहाय गृहीता क्रीडे प्रियते तथा पूर्णमथापि चक्रेण दृश्यं. ।

प्रसारयन् सन्तरणे पटुत्वात्
  सकोचयन् बाहुयुगं स राजा ।
वारत्रयं संप्लवमान एव
  ततार वापीं मुखराब्जजालिम् ॥ ३२ ।
मुदा तदुत्पीड़ितवारिवृन्दं
  प्रसर्पदङ्काय तटं समाप्नत् ।
पत्युः चिते ! पश्य विचेष्टितं किम्
  इतीव तस्यै गदितुं प्रवृत्तम् ॥ ३३ ।
उन्मज्जदारात् वदनं प्रियायाः
  प्रियः समालोक्य विमथ्यमानात् ।
अम्भोनिधेस्त विधुमुत्तरन्तं
  सस्मार दृष्टामृतधारमुग्धम्* ॥ ३४ ।
कोकिलैरथ रुवद्भिरञ्जसा
  स्वागतोक्तमिव प्रमोदितैः
वायुनेव चलता च वीजितं
  पादपैरिव सुमैः† कृतार्चनम् ;
सौरभभ्रमितभृङ्गजालकं
  ज्योतिरारुणितसर्व्वकाननम्

---

* प्रिय पति श्रीवत्स धारात् सम्मुखे उन्मज्जत स नलात् उत्थित प्रियायाः चिन्तायाः दृष्टामृतधारमुग्ध दृष्टा न लता अमृतधारा जलधारा यस्मात् तत् अतएव मुग्ध मनोज्ञं वदनं मुखं विलोक्य विमथ्यमानात् सुरासुरैः क्रियमाणमन्थनात् अम्भोनिधेः सागरात् उत्तरन्तम् उत्तिष्ठन्तं दृष्टामृतधारमुग्धं दृष्टयः गलन्त्या अमृत धारया सुधाधारया मुग्ध मनोहरं तं विधुं चन्द्रं सस्मार स्मृतवान् ।

† सुमे कुसुमे ।

प्रादुरास सहसा तिरोदधत्
तिग्मसौरकरमात्मतेजसा* ॥ २५,२६ । युग्मकम् ।

स्त्रग्यालकैश्छन्नकपोलभागं
समेघलेखं निपतत् नभस्तः
उद्भासयत् काननमंशुजालैः
पूर्व्वं विधोर्विम्बमिवातिदूरात् ;

ग्रीवोदयात् तत्परमेव सम्यक्
विलोलनेत्रं विचलद्द्विरेफम्
सनालमम्भोजमिवातिरम्यं
वातेन बुन्नं किल मानसोत्थम् ;

अतुल्यविव्वोकसुखं दधानां
सम्यग्विभक्तावयवेति नारीम्
निमेषशून्येति सुराङ्गनां कां
पाशाञ्चहस्तेति हरिप्रियां ताम् ;

उत्कन्धरः स्तम्भितवत् मुहूर्त्तं
निस्पन्दनेत्रो जलमग्नदेहः

---

* अथ असहसा सहसा दयहिः कल कूर्णाह, प्रमोदते, कोकिले स्वागतीकृतमिव, चलता वायुना वीजितमिव, पादपैः सुमैः पुष्पैः कृताञ्जनामिव, सौरभभरितभृङ्गजालकं सौरभेण वातगन्धेन भासतम् उद्भासितम् भृङ्गजालम् अलिपङ्क्तिः येन तादृशम्, अचिरविलसन्तं काननम् अत्याश्चर्यम् अत्युद्वर्धितं कर्म्यं काननं येन सह तादृशम् आत्मतेजसा स्वकान्त्या तिग्मसौरकरं तेजः सूर्यबिम्बं तिरोदधत् आच्छादयत् ज्योतिः किमपि तेन सहसा अतर्कितं प्रादुरास दृष्टिगोचरतां गतम् ।

दर्दर्श पश्चात् द्रुतमुत्थितः सन्
स्थितामभूमिस्पृशमित्य हृष्टः ;
स्वप्ने मया या किल दृष्टपूर्व्वा
सैवेयमप्राकृतमूर्त्तिरम्बा
सुवाच्ययैव सह धर्म्मपत्न्या
भक्त्या विनीतः प्रणनाम राजा*॥२७-४१॥कुलकं
वन्दारुमन्दारमनोज्ञवर्णां
देहद्युतिद्योतितदिग्विभागाम्
मन्दस्मितानन्दितभक्तवृन्दां
फुल्लारविन्दार्पितपादपद्माम् ;

---

* तत जलमग्नदेह उत्तकम्पर मुहूर्त्तं स्तम्भितवत निश्पन्दनेव नृप पूर्व्वं विद्
कुमालके कुमावर्णे स्वर्णकुन्तले कुन्दकपोलभालम पान्धर्व्वगाडम अतएव स
लिलम मेघखण्डस्यात नभस्त आकाशात निपतत अंशुजाले दानवम उज्ज्वा
उज्ज्वलीकुर्व्वत, विधौयन्द्रस्य विम्बमिव मण्डलमिव लक्ष्यमाणम ततपरमेव पर
एव सम्यक श्रीश्रीदशात् कल्पनालदशनात श्लिलिनेव गमनवशात चञ्चलगत स
माण नभ दक्षिण् तादृशम अतएव विचल दुरैफम अतिरम्यं मानसीत्य का
सरोवरस्यात वातैर्नाम वायुना भूतलाभिमुख चालित कमाल मृणालदण्डमपि
अभीजमिव पद्ममिव प्रतीयमानम ईदृशम अतुल्यविम्बोकामुख निरुपमसौन्दर्य्यम
मुख वदन दधाना धारयन्ती क्रमेण सम्यक् विभक्तावयवा सम्यक बोधगम्यम
गउना इति इति देवी गार्गी या काचित लग्ना तत निमिषशून्या नैवस्पन्दनरा
दात इति देवी यो काचित् सुराङ्गना तत पाशाच्छस्ता हस्ते पाशम च
दधती इति इति देवी तां हरिप्रिया लक्ष्मीं ददर्श पश्चात द्रुतम उत्थित
अभूमिस्पृशम अस्पृष्टभूतला स्थिता ताम एव उपस्थित हृष्ट मया स्वप्ने या
पूर्व्वा दृष्ट सैव अप्राकृतमूर्त्तिं अलौकिकशरीरा अम्बा माता लक्ष्मी एव सुवा

अचिन्तनीयोपगमां विलोक्य
  निश्वासमोचेऽपि निवृत्तवृत्ति:
अमन्दमानन्दमवाप्य यावत्
  स्तोतुं नृप: प्रक्रमते सभार्य्य: ;

तावत् समायान्तमतीवभीमं
  नीलोत्पलश्याममनूनकायम्
भूकम्पनुन्नासितशैलदर्पं
  ददर्श कश्चित् पुरुषं विदूरात् ॥४२-४४। त्रिभिर्विशेषकम् ।

वित्रासितद्रावितजीवसंघ:
  शनै: समेत्य क्षितिपं जगाद ।
शनैश्चरोऽहं नृप ! सूर्य्यपुत्र:
  त्वामागत: संशयनोदनार्थम् ॥ ४५ ।

हरिप्रियेयं जलधेस्तनूजा
  छायोदरादस्मि कृतात्मलाभ: ।
निष्पक्षपातो वद सम्प्रधार्य्य
  प्राधान्यमस्या मयया समेति ॥ ४६ ।

निशम्य वाक्याहतवत् स राजा
  तस्थौ क्षणं किंप्रतिपत्तिमूढ: ।
क्षणाच्च लब्धप्रकृतिर्नतस्तम्
  प्रोवाच बद्धाञ्जलिरेनमेवम् ॥ ४७ ।

सुरैरसाध्यं सहस्रांशु ! मद्विध:
  कथं समाधातुमलं भवेदिदम् ।

तथापि यत् नाथ ! नियोजितस्त्वया
विचार्य्य वच्मि तदहं यथामति ॥ ४८ ।

परेद्यवि प्रातरहं महेश्वर !
प्रबुद्ध एव प्रयत: सदोऽगृहे
प्रयापयिष्ये समय निराकुल:
प्रतीक्षमाणो भवतो: शुभागमम् ॥ ४९ ।

तथेति तस्मै प्रतिशुश्रुवानसौ
श्रिया समेतस्तदुपान्तवर्त्तिभि: ।
समीरित: साङ्कुतमात्मजो रवे-
स्तिरोदधे पश्यत एव भूपते: ॥ ५० ।

नरपतिरपि त शनैर्निदेश
मनसि दधत् भवन प्रियानुयात: ।
किमिदमुपनत न बोद्धुमीशो
न च शुभमेतदिति प्रतर्क्य यात: ॥ ५१ ।

इति श्रीश्रीवत्सचरिते महाकाव्ये
विवदमान श्रीशनैश्वरसन्दर्शनो नाम तृतीय: सर्ग: ।

जयेति जीवेति च भंकृतिच्छलात्
चदीर्य्यते चाविरतं मधुव्रतैः ॥ ५ ।
निलीनभृङ्गैः कुसुमैः सुलोचना
तताङ्गुलिश्चम्पककोरकैरियम् ।
विभावरी दर्शयतीव वल्लभं
प्रियां वयस्यां स्थलपद्मिनीं मुदा ॥ ६ ।
इयञ्च तं वीक्ष्य मुदा हसन्मुखी
गतव्यलीका नितरां विकाशते ।
सखीं समीक्ष्य प्रियसङ्गगर्व्विताः
न का समभ्येति परां मुदं सखी ॥ ७ ।
विधोः करस्पर्शभिया सरोजिनी
प्रणीय संकोचमलं स्वमङ्गकम् ।
समाकुला तिष्ठति, का पुरःस्थित
विलोक्य हृष्येत् प्रतिनायकं सती ॥ ८ ।
शिरोधरा सा विनमय्य भासते
जगत्सु या सूर्य्यमुखोत्युदीर्य्य ते ।
परस्य पुंसः पुरतो विनम्रता
पतिव्रतायाः खलु शोभतेतराम् ॥ ९ ।
विभाति सर्व्वं विगतान्तरं जगत्
वितापमुद्राश्रितवस्तु शीतलम् ।
परस्परमभ्येति सुरम्यतां विधौ
विराजमाने ह्यनुकूलतां गते ॥ १० ।

सलीलखेलत्तुहिनांशुदोधितिं
तरङ्गयन् निर्झरिणीं मुहुर्मुहुः
प्रनर्त्तयन् पुष्पितवल्लरीततिं
ससम्भ्रमोद्भ्रान्तमधुव्रतातिथिम् ;
परागमुष्टिं नवकुङ्कुमारुणं
किरन् सलीलं विग्रहे दिशां मुखे ।
विचालयन् उत्कलिकासमाकुलां
मुहुर्मुहुस्तां नवमालिकालताम् ;
सकौतुकं विस्मयबन्धनं घण
द्विरेफवृन्दानुगतं ससौरभम्
निपातयन् भूमितले च नीलिका-
प्रसूनराशिं शुभलाजविभ्रमम् ;
•विशन् गवाक्षेण गृहं वरस्त्रियाः
जिह्वोर्युरङ्गादिव किञ्चिदोषितम्
"इयं मृगाक्षी चतुरा दिधीर्षया
च्छलेन निद्रात्युत तत्त्वतस्तथा"
इतीचितुं भीत इव श्वसन् शनैः
मरुत् समाकर्षति तत्पटाञ्चलम्*॥ १ १४ कलापकम् ।

* सलील खेलन्तो तुहिनांशोश्चन्द्रस्य दीधिति रश्मिजाल यस्या] तादृशीं निर्झरिणीं नदीं मुहु मुहु तरङ्गयन् सञ्जाततरङ्गा कुर्व्वन्, ससम्भ्रमोद्भ्रान्तमधुव्रता तति ससम्भ्रम उद्भ्रान्ता उत्पतन्त मधुव्रता भ्रमरा एव अतिथयो मधुपानार्थिनो यस्या तादृशीं पुष्पितवल्लरीततिं संजातकुसुम लताजाल प्रनर्त्तयन् कम्पयन् नव-कुङ्कुमारुण परागमुष्टिं विग्रहे दिशा ककुभा नायिकानाञ्च मुखे प्रारम्भे वदने च सलील • किरन् विक्षिपन् उत्कलिकासमाकुलाम् उत्कलिकाभि कुड्मलै

हिमप्रभेऽभ्रे परितः स्थितेऽम्बरे
प्रयाति मन्दच्छवितां क्षणं विधुः
क्षणं तिरोधाय लवे तड़िल्वतो
गते च धत्ते लसदंशुतां पुनः ;
प्रविश्य च स्वेन करेण चित्रित
सुरायुधाभ शकल पयोमुचाम्
विचित्रवस्त्राञ्चलसङ्गतं क्षण'
वराङ्गनावक्त्रमिवावभासते* । १५, १६ । युग्मकम्।

---

च्छतकण्ठया च समाकुला व्यथा पीडिताञ्च ता नवमालिकालतां काञ्चित् विरहखेद दुःख विचालयन् विचालितां व्याकुलाञ्च कुर्व्वन्, प्रमत्तोऽजविभ्रम चाचारलोज्ज्वाल वत् प्रतीयमान निश्चयबन्धन शिथिलहस्त हिरफलन्दाद्गत समीरण नीलका प्रसूनराशि शेफालिकापुष्पनिकरं भूमितले सकौतुकं च निपातयन्, गवाक्षेण गृह विशन् प्रविशन् वरस्त्रिया कस्याश्चन उत्तमाङ्गनाया अङ्गात् किञ्चित् ईप्सितम् अङ्गरागसौरभम् भूषणञ्च जिहीर्षुरिव चोरयितुमिच्छुरिव लक्ष्यमाणः, इयं चतुरा सगाक्षी दिधीर्षया मम धारणेच्छया छलेन निद्राति उत अथवा सत्यं तथा स्वरूपतो निद्राति इति ईक्षितु भीत इव श्वसन् शनैः वहन् निश्वास स्वरूप मरुत् वायु (कर्तृपदम्) तत्पटाञ्चलं तस्या वरास्त्रिया वसनाञ्चलं समाकर्षति आक्षिपति।

* अम्बरे आकाशे हिमप्रभे शुभ्रे अभ्रे मेघे परितः सम्यक् स्थिते सति विधु चन्द्रः क्षणं मन्दच्छविता म्लानकान्तितां प्रयाति प्राप्नोति, तडित्वत मेघस्य लवे खण्डे क्षणं तिरोधाय आच्छाद्य गते अपसृते सति पुनः भूयः लसदंशुतां उज्ज्वल-कान्तितां धत्ते धारयति विधुरिति शेषः, क्षणं स्वेन करेण किरणेन हस्तेन च चित्रितम् अतएव सुरायुधप्रभ शक्रधनुःसदृश पयोमुचां मेघानां शकलं खण्डं प्रविश्य विचित्रवस्त्राञ्चलसङ्गतं नानावर्णवस्त्रावृत वराङ्गनावक्त्रमिव उत्तमाङ्गनामुख मण्डलमिव अवभासते शोभते विधुरिति शेषः ।

तया श्रिया तेन च सूर्यसूनुना
परेद्युरागत्य यदानुयोक्ष्यते,
किमुत्तरं दास्यति तद्विनिर्णयं
विधाय राजा सचिवैः समन्वितः ;
विवेश चिन्तासदनं, विलोक्य तां
निशि प्रयान्त्यामपि गाढ़तां तथा
स्वथालकां दुर्मनसञ्च जाग्रती-
मभूच्च चिन्ताकुलमानसो भृशम् ॥१७,१८। युग्मकम् ।
अज्ञातबाष्पोद्गमकारणोऽसौ
उपेत्य पार्श्वं परिशङ्कमानः ।
प्रमृज्य हस्तेन कपोलपाति
बाष्पोदकं तामवदत् स चिन्ताम् ॥ १९ ।
किमित्यकाण्डे वद कोमलाङ्गुलि-
च्छदे करान्ते वदनेन्दुमण्डलम् ।
निवेश्य बाष्पाकुललोचना प्रिये !
सगद्गदं रोदिषि मुक्तभूषणा ? २० ।
त्वयि प्रकृष्टप्रणया निसर्गतः
सहोदरा मे कमलामलश्रिया ।
अपत्यतश्चाभ्यधिकं सदा त्वयि
प्रसूः शुभे स्निह्यति मत्तकामिनि !* ।२१।
समग्रशक्तौ मयि जीवति प्रिये
विमानना स्यात् परतः कथं नु ते ?

* मत्तकामिनि !—हे वरारोहे ! हे सर्वाङ्गसुन्दरि ।

क इहकोपस्य हि जाग्रतो हरेः
सटा समाकर्षति सञ्जिजीविषु. ? २२ ।

त्वदेकहार्दस्त्वदधीनजीवित
स्त्वदेकजानिर्निपुणं* विचिन्तयन् ।
न लक्षये स्वल्पमपि स्वसम्प्रय
प्रिये विनीतिस्खलन वहुक्षमे । २३ ।

तदद्य किञ्चित् किमु सुप्तया त्वया
व्यलोकि हार्दस्खलनं मदाश्रयम् ?
न चित्रमेतत् स्वपतोऽपि हार्दिनो
विभावयत्येव मनोऽविनीतताम् ॥ २४ ।

न जानता तन्वि । मया कदापि ते
व्यधायि पापं†, ननु वेत्सि कार्य्यत ।
अजानता चेत्, तदबोधपूर्व्वक
कृत तथा नूतनमित्युपेक्ष्यताम् ॥ २५ ।

निदानमाधेः किमु निह्नुषे प्रिये ।
चिराय मह्यं परिपृच्छते वद,
वदाद्य चाभाष्यमपि त्वदाश्रित
न तन्वि ! किं मा गणयस्यकारणम् ॥ २६ ।

इति प्रियेणाभिहिता स्वधालकान्
ततः समुत्सार्य्य मुखेन्दुमण्डलात् ।
तदाननासक्तदृगित्थमाकुला
वरानना प्रक्रमते स्म भाषितुम् ॥ २७ ।

---

* त्वमेव एका जाया यस्य तादृश । † पाप—विप्रियम् अनिष्टमिति यावत् ।

कियच्चिरं कुत्र च किंविधं तपः
   सुदुष्करं शैलभुवाप्यपर्णया ।
कृतं मया, येन भवादृशोऽधुना
   चिरानुकूलः पतिरापि वल्लभ !* २८ ।
तपस्तु तावत् कृतमेव, यावता
   भवद्विधः सत्पतिरेव लभ्यते ।
भवन्त्यपुण्या बहवोपि संसृतौ
   न लक्षये मामिव किन्तु कामपि ॥ २९ ।
स्थिरप्रसादस्य समयसम्पदो
   मदेकजानिर्भवतः प्रसादतः ।
अरुन्तुदान्या न, विहाय तां व्यथां
   स सूर्यसूनुः किल यां करिष्यति ॥ ३० ।
यदा पापः सौरिः सति सुरसमाजे सुचतुरे
   भवन्तं सम्प्राप्तो ननु विवदमानः कमलया ।
तदा ज्ञातं राहुर्विधुरविधिनामा कलयितुं†
   मुखेन्दुं पूर्णं मे विकटवदनं व्याददं इति ॥ ३१ ।
लक्ष्मप्रदा पत्युरलक्षणीयं
   चिन्तेति वक्ष्यन्ति समस्तलोकाः ।
तत् संस्मरन्त्या मम पश्य मूर्छा
   विघूर्णते सीदति गात्रबन्धः ॥ ३२ ।

---

* हे वल्लभ ! अपर्णया, तपश्चरणकाले पत्रभक्षणमपि अकुर्वन्त्या शैलभुवा पार्वत्या सुदुष्करं किंविधं तपः कियच्चिरं कुत्र मया कृतं, येन तपसा अधुना भवादृशः चिरानुकूलः पतिः आपि मया प्राप्त । † भक्षयितुम् ।

निर्मांसदेहोऽतिकरालदर्शः
शुष्कोदरः श्मश्रुजटावकीर्णः ।
नीलोत्पलाभः पृथुकोटराक्षः
प्रतिक्षणं द्रक्ष्यसि मृत्युसूनुः ॥ २३

अन्तरीक्ष इवोत्कीर्णो
निष्ठ्यूत इव चक्षुषोः ।
पश्य भीषयते शश्वत्
मामयं यमसोदरः ॥ २४ ।

इति ब्रुवाणां गुरुकम्पकातरां
विलोलनेत्रां दयितां विचेतनाम् ।
भुजे समावेशितकम्बुकन्धरां
नृपः समाश्वासयितुं प्रचक्रमे ॥ २५ ।

अस्त्यत्र कश्चित् विधिरित्युदाहृतो
यद्रोचतेऽस्मै कुरुतेऽयमाशु तत् ।
समस्त एवं तदधीनवृत्तिनि
प्राणेशि ! किं तत् रुदितैः प्रयोजनम् ॥ २६ ।

सर्वं ज्ञात तेन धनेश्वरेण
कृच्छ्रं महत् घोरमिवार्णवं तत् ।
समुत्तरीष्यामि वरोरु ! पोत-
कल्पेन वृत्तेन तवैव नूनम्* । २७ ।

---

* हे वरोरु ! पोतकल्पेन अर्णवयानतुल्येन तवैव वृत्तेन चरित्रेन पातिव्रत्येन नूनं तेन धनेश्वरेण ज्ञातं सर्वं तत् कृच्छ्रं कष्टं घोरम् अर्णवमिव समुत्तरीष्यामि ।

अज्ञातगतयामेयम्
एवमासक्तचेतसोः।
जाग्रतोरेव नौ कान्ते!
क्षयं याता क्षणात् क्षपा ॥ ३८ ।

रात्रिर्गता वहति पश्य विभातवायुः
कूजत्ययं पिकवरस्तव पञ्जरस्थः।
अस्याः स्रजः सुमनसः* सुमनस्त्वयैताः
दृष्ट्वेव ते गतिमिमां मलिनीभवन्ति ॥ ३९ ।

इन्दोर्विहारभवने गगने विकीर्ण
पुष्पोपहारमिव सुन्दरऋक्षजालम्।
अस्मै परेद्युरिव दातुमियं नु सन्ध्या
रक्तांशुकाञ्चलहृतं कुरुतेऽवचित्य† ॥ ४० ।

लब्धोदयस्य पुरतोऽतिविनीतभाव
मित्रस्य साधुचरितः पुरुषो हि धत्ते।
आवेदयन्निति रवेर्बुपालितोयं
चन्द्रोऽस्तमेति तमवेक्ष्य विलीनशोभः‡ ॥ ४१ ।

---

* सुमनस.—पुष्पाणि परद्धु स्तकातरा स्त्रियश्च।

† इयं सन्ध्या उषा इन्दोः विहारभवने गगने विकीर्णं विचित्र सुन्दरम् ऋक्षजालं नक्षत्रसमूहम् अवाचित्य एकैकशो गृहीत्वा परेद्यु आगामिदिवसे अस्मै इन्दवे दातुमिव दातुकामेव रक्तांशुकाञ्चलहृत रक्तवस्त्रप्रान्ते सञ्चाप्य निबद्ध कुरुते।

‡ साधुचरित सदाचार पुरुष लब्धोदयस्य लब्ध उदय वृद्धि प्रकाशश्च यस्मात् तस्य मित्रस्य बन्धो, सूर्यस्य च पुरतः समक्षम् अतिविनीतभावम् अतिनम्रता धत्ते हि धारयति खलु इति इत्येवम् आवेदयन् ज्ञापयन् रवे सम्यक्

तत् सभामण्डपं गत्वा
कृतनित्यक्रियाविधिः
तयोरागमनं कान्ते !
प्रतीक्षिष्ये प्रतीक्ष्ययोः ॥ ४२ ।

इति श्रीश्रीवत्सचरिते महाकाव्ये उदितचिन्ता-
चिन्तोद्वेगो नाम चतुर्थः सर्गः ।

---

वस्मीश वसुपालित वसुभि किरणै धनैश पालित उपचित अथ चन्द्र तं रविम् अवेत्य विलोनशोभ म्लानकान्ति निगूढोद्धतभाव सन् अस्त निम्नत स्थानम् एति गच्छति ।

## पञ्चमः सर्गः ।

---

अम्लानवदनो राजा
   छत्रराजपरिच्छदः ।
शनैश्वरेष्टदेवीं ताम्
   अस्थिमालाविभूषिताम् ;
सर्पनद्धजटाजूटां
   लोलजिह्वां भयंकरीम्
द्वीपिचर्म्मपरीधाना
   त्रिपुरारिविमोहिनीम् ;
खड्गनीलोत्पलकरा
   कर्त्तिखर्परधारिणीम्
इन्दीवरदलश्यामा
   रक्तनेत्रा चतुर्भुजाम् ;
ज्वलन्त्योषितयोरन्त-
   राले घोरे व्यवस्थिताम्
लम्बोदरीं करालास्या
   खर्व्वा सर्व्वोन्नतोन्नतिम् ;
शवरूपे महाकाले
   प्रत्यालीढ़ाख्यसंस्थिताम्
तारा विचिन्तयन् भक्त्या
   विवेशास्थानमण्डपम् ॥ १-५ । कुलकम् ।

दक्षिणेन नृपतेर्वरासनं*
स्थापिते च कलधौतनिर्म्मिते†
उत्तरेण रजतैश्च कारिते
पीठ आत्मविभवानुरूपके ;
आस्थानगेहे च नृपाज्ञया ततः
पुष्पोपहारैश्च सुरम्यभक्तिना
सज्जीकृते मृष्टसुसिक्तकुट्टिमे
तैः स्तैश्च नानाबलिभिः समन्विते ;
दिग्भ्यः समेते दैवज्ञः समन्तात्
लोकैरहम्पूर्व्विकया विशद्भिः
प्रदोसकौतूहलसूर्द्धितैवैः
नीरन्ध्रसद्माजिरभूमिभागे ;
सधूमरेखं ज्वलदर्च्चिषं पुरा
हुताशनं वा चलविद्युतं घनम्
बुबोध राजा निपतन्तमम्बरात्
ततः श्रिया तं बुबुधे शनैश्चरम् ॥ ९ ॥ कलापकम् ।
शनैश्चरः प्रागवतीर्य्य पुष्पकात्
प्रसारयामास करं समाहृतः ।
तमेव पाथोनिधिसम्भवा‡ रमा
समालम्ब्य ऽवततार च क्षणात् ॥ १० ॥

---

* वरासनमित्यत्र दक्षिणेन उत्तरेण च इत्येतयोर्योगे तृतीया ।

† स्वर्णमये ।

‡ पाथोनिधिसम्भवा—समुद्रजा लक्ष्मीरिति यावत् ।

विमोहितोऽसौ हरिमायया श्रियं
न्यवीविशत् तां प्रथमं वरासने ।
ततः परं द्राक् रजतेन निर्मितं
स्वयं तदभ्यास्त निकृष्टमासनम् ॥ ११ ॥
ततश्च राज्ञा मुदितान्तरात्मना
यथाविधि प्राक् समपूजि सिन्धुजा ।
अनन्तरं भक्तिपरेण यत्नतः
प्रियैः समयैर्बलिभिः शनैश्चरः ॥ १२ ॥
तथाप्रवृत्ताय नृपाय सूर्यज-
श्चुकोप शृङ्गव्यपरोपणात् ततः ।
क्रुधाग्न्ये नेत्रात् गिरिगह्वरोपमात्
उदर्चिरग्निर्निरगात् निरन्तरम् ॥ १३ ॥
स चाह भूपं शृणु रे नृपाधम !
त्वमद्य यस्मात् अपकृष्य मां छलात् ।
प्रकर्षसीमां* बहुवल्लभां श्रियं
तदस्य तूर्णं फलमाप्स्यसि ध्रुवम् ॥ १४ ॥
श्रियः पतिर्मे समधुक्षयत् क्रुधं
क्रुधोऽनुरूपं यदवाप्स, तत् कथम्
स्मृतिं न ते यातमबोध ! दुर्मते !
तदद्य जागर्ति जने जनेऽमियम् ॥ १५ ॥
अमांसदेहो रुधिराङ्गमीदृशा
सुचारुशृङ्गोऽयमहं जटाधरः ।

---

* प्रकर्षसि अकर्षसि ।

सरोजनेत्रेयमहन्तु कोटरो-
पमेक्षणस्तत् बहुमन्यसे श्रियम् ? १६ ।

धनाधिदेवीति शनेर्गरीयसीं
हरिप्रिया पश्यसि रे नृपाधम ।
न वेत्सि तस्मिन् प्रतिकूलतां गते
शनौ, क्व लक्ष्मीः क्व च तत्पतिर्हरिः ॥ १७

नित्यं क्षुधार्त्तोऽस्मि सदाऽस्मि तृप्तः
दीर्घोऽस्मि सूक्ष्मोऽस्मि च कालरूपः ।
सर्व्वक्षयायास्मि विमानितः सन्
प्रसादितः सर्व्वसुखाय चास्मि ॥ १८ ।

एवं प्रकोपेण परीतचित्तं
सञ्जातभीमभ्रुकुटीकरालम् ।
प्रचक्रमे साध्वससन्नकण्ठः
शनैः शनिं सान्त्वयितुं नृसोमः ॥ १९ ।

जाने प्रदाहार्त्तिकरीं नु शक्तिं,
प्रविष्टवानस्मि तथापि वह्नौ ।
तवैव सम्मानविवर्द्धनार्थं
त्वत्कोपपात्रं भगवन् ! भवामि ॥ २० ।

व्यधत्त सम्मानविशेषमार्य्यैः
श्रियः स्वयं, तेन विमोहितोऽहम् ।
भिमोन्निताक्षी रजसा नरत्वा-
दमासिषं तां भवतोऽधिकेति ॥ २१ ।

भवान् स्वयं स्वर्णमये च पीठे
   न्यवेशयत् तां बहुमानपूर्व्वम् ।
न्यविक्षताऽस्मिन् स्वयमेव पश्चात्
   पीठे, तदा किं करवाणि तात ! २२ ।

स्वयं त्वया या कृतसाधुपूजा
   सैषा कथं तात ! भवेत् विमान्या !
विमोहनार्थं यदि देव ! तादृक्
   कृतं त्वया स्यात्, न मया विबुद्धम् ॥ २३ ।

स्पृशामि ते नाथ ! पदारविन्दम्,
   मदीयजं दोषमिमं क्षमस्व ।
भवादृशानां पुरतोऽस्तैव
   दोषप्रसृष्टौ नहि कारणं किम् ? २४ ।

इति युवकं नृपतिं गणेश्वरः
   दहन्निव क्रोधमयेन वह्निना ।
उवाच रे ! स्पष्टमिदं छलं त्वया
   कृतं श्रियो गौरववर्द्धनार्थिना ॥ २५ ।

अरे पशो ! अभियपांशुल ! त्वया
   नृपासनस्यास्य पुरः समाकृति ।
प्रदीप्तचामीकरनिर्म्मितं कथं
   न रचितं चासनयुग्ममन्यथा ॥ २६ ।

भ्रूकुट्या भीमदर्गे वदनमविरताहामघोरर्स्तुमित्र
   मेघ रक्तोत्पलाभं दशनविदलितां चोष्ठमुद्रां दधानः ।

मुष्ट्या निष्पिष्टदेहो धरणिधर इव क्ष्माविकम्पप्रगुणः*
पीठं तत्याज रोषात् स तरणितनयः सेर्ष्यमालोक्य लक्ष्मीम्॥२७

समुत्थिते चोत्पतिते क्रुधा शनौ
स्थिराऽपि घोरेऽप्यविघोरदर्शने।
स्थिरा† चकम्पे प्रचलोऽचलोऽभवत्
कठोरनादा वहति स्म वाहिनी॥ २८।
विवेश मित्रोऽ‡ जलदोदरं ह्रिया
सदागतिः¶ स्वभ्रगतिश्च विस्मयात्।
शुचा निकुञ्जे प्रबभूव नीरवे
महीरुहालि..समवाप धीरताम्॥ २९।
तृणाय नाचेष्टत हा मृगाङ्गना
न्यवर्त्ततोधस्यनिपानतः शिशुः।

---

* भ्रुकुट्या भ्रूभङ्गेन भीमदर्शं भीमं भयङ्करं दर्शं दर्शनं येषां तत् तादृशं वदनं मुखं (दधान इत्यस्य कर्म) तथा आवर्त्तोद्दामघोरस्फुलिङ्गम् अविरतम् उद्दामा निःसरन्तः घोराः स्फुलिङ्गाः यस्मात् तत् तादृशं रक्तोत्पलाभं रक्तकमलतुल्यं नेत्रम् (पूर्ववत् कर्म) तथा दशनविदष्टोष्ठं दन्तदष्टाधरम् आस्यं दधान (तरणितनय इत्यस्य विशे) मुष्ट्या निष्पिष्टदेहः मुष्टिप्रहारेण निष्पिष्टः दह क्रोधात् निजशरीरं येन तादृशः क्ष्माविकम्पप्रगुणः भूमिकम्पचालितः धराधरः इव पर्वत इव सत्यभामः स तरणितनयः सूर्यपुत्रः शनैश्चरः सेर्ष्यं सासूयं लक्ष्मीं रूपसम्मानितां श्रियम् आलोक्य रोषात् क्रोधभरेण पीठं नृपदत्तं रत्नमयम् आसनं तत्याज त्यक्त्वा उत्तस्थौ।

† स्थिरा—पृथ्वी।

‡ मित्रः सूर्यः ह्रिया आत्मपुत्रस्य सतः कारणं विना ईदृशं क्रोधं ज्ञात्वा लज्जया।

¶ सदागतिर्वायुः।

कपोतपत्नी धुतपक्षताड़ितं
  चकार कान्तं, करुणं रुरोद च ॥ १० ।

महीलोड़नपराय धेनुभिः
  शष्पमुक्तमुखं विलोकितः,
सद्रवद्भिरभितो भयाकुलैः
  मुक्तपुष्करपथश्च खेचरैः• ;

इच्छतीभिरिव जालमार्गतः
  पञ्जरस्य सहसा विनिर्गमम्
त्रासतारतरचित्तकृतिच्छलात्
  सारिकाभिरिव याचितागमः ;

हा हताश्मि किमिदं निपात्यते
  दुष्टदैवहतकेन पुत्रक !
इत्युदीर्य्य गुरुकम्पया भयात्
  बोधितः प्रथमया नृपाम्बया ;

रे नराधम ! मुनेः प्रकोपजम्
  माचिरेण विकटं फलं त्वया
प्राप्स्यते ननु वदामि भण्यते
  सौरिरित्यभिदधत् तिरोदधे ॥ ११—१४। कलाप

[illegible]
  हन्तता गतवति क्रमेण सा ।

---

• [illegible]

सिन्धुजा नृपतिगेहिनीं समा-
  हूय त नृपमवोचदादरात् ॥ ३५ ।

नन्दनात् शिथिलबन्धना चितौ
  आहृता सुमनस मरुत्वता ।
तुभ्यमर्पितवती, समाहृतो
  भूपयात्मशिर एनयाशिषम्* ॥ ३६ ।

अकीटदष्टेन हि येन गर्व्विता
  सती हसत्येव बहुप्रिया श्रियम् ।
नृपाच तद्रत्नमसिन्धुसम्भव
  सतीत्वरूप म्रियतेऽपरिच्युतम्† ॥ ३७ ।

पयश्च ते क्रोधवशाद् यतिष्यते
  तमोभिराच्छादयितु शनैश्चर ।
पतिव्रताया नृप ! तन्मणिप्रभा-
  प्रदर्शिताध्वा सुखितश्चरिष्यसि ॥ ३८ ।

सतीत्वमाहात्म्यमशक्यवर्णनं
  तथापि किञ्चित् शृणु तत् समाहितः ।

---

* शिथिलबन्धना मन्दत्वात् वायुना मन्दमारुतेन नन्दनकाननात् चितौ आहृताम् आनीतां सुमनसं पुष्पं कल्पद्रुमपुष्पं आपतन्ती दत्तवती, तं समाहृत अनु एनया सुमनसा भार्यामिव निजमस्तकम् अशिरः भूपय इत्यभ्युपगतादि, चिन्तोर्मि स्थिता कार्यवशात् पृथिव्यामवतीर्णाम् इमां मदग्रभूतां चिन्ता तुभ्यं दत्तवती, तं समाहृत एनया धृतस्त्रीव भुज तिष्ठ इति प्रस्तावः ।

† हे नृप ! सती पतिव्रता अकीटदष्टेन कीटदंशनरहितेन येन रत्नेन गर्व्विता सती बहुप्रिया श्रियमपि हसत्येव अभिसिन्धुसम्भवम् असमुद्रोद्भूत तत् सतीत्वरूपं रत्नम् अपरिच्युतम् यत् तत् चिन्ताद्यो म्रियते तदपि तिष्ठति विद्यते इत्यर्थः ।

स्वामिपादनलिनं विचुम्ब्य सा
जानकी विशदमन्दहासिनी ।
आजुहाव दहने वपुः क्षणात्
चेतसा स्मृतसतीपदाम्बुजा ॥ ४५ ।

द्योतयन् दश दिशः प्रतिघ्नतां
द्रष्टृवर्गनयनानि तेजसाम् ।
राशिरग्निमविशत् तडिद्द्युतिः
विस्मयोच्चकितरामवीक्षितः ॥ ४६ ।

तत्र कापि महिलाद्भुताकृतिः
स्पर्शमात्रहृतसर्वसंज्वरम् ।
ज्योतिरुज्ज्वलतरं हुताशनात्
बिभ्रती जनककन्ययेक्षिता* ॥ ४७ ।

'मा विदेहतनये ! भयं कृथाः'
इत्युदीर्य करुणामयी ततः ।
जानकीं समुपगृह्य विह्वलाम्
अङ्कमध्यमनयत् समाहिता ॥ ४८ ।

वायुना गगनखेलगामिना
द्राक् प्रशान्तमहसोऽदीधितौ ।
अद्यता जनकजामलद्युतिः
साद्भुतैः समवलोकि दर्शकैः ॥ ४९ ।

---

* जनैकन्यया अद्भुताकृति स्पर्शमात्रहृतसर्वसंज्वरं हुताशनात् उज्ज्वलतरं ज्योतिः बिभ्रती कापि महिला तत्र दृशि ईक्षिता ।

तां विलोक्य कपयस्तथाविधां
प्रीतिहर्षिततनूरुहास्ततः ।
नेदुराप्लुतपराः समन्ततः
तत्पदञ्च नियतं चुचुम्बिरे ॥ ५० ।

किन्नराः क्वणितवल्लकीगुणाः
संजगुर्ललितमम्बरे मुदा ।
मञ्जुनिक्वणितरत्ननूपुराः
निर्भरञ्च ननृतुस्तदङ्गनाः ॥ ५१ ।

साङ्गतस्य नितरां प्रवेदुषी
वल्लभस्य चरणे नतां सतीम् ।
पारिजातकुसुमैः सुराङ्गनाः
गन्धमुग्धमधुपैरवाकिरन् ॥ ५२ ।

यतो रविसुतादहं सुवर्णरत्न ! संवर्द्धिता
विचक्षणतया त्वया निपुण ! राजकार्य्ये, ततः ।
त्वयि स्थिरतमा रमाप्रलयमस्तु* पृथ्वीपतौ
इति चितिभृत निगद्य कमला द्युलोकं ययौ ॥५३।

इति श्रीश्रीवत्सचरिते महाकाव्ये शनैश्चरातिक्रोधो
नाम पञ्चमः सर्गः ।

---

*रमाप्रलयम् — रमा + आप्रलयम् ।

---

## षष्ठः सर्गः ।

छिद्रं क्रमेण संप्राप्य
राजानमाविशत् शनिः ।
वैगुण्यात् तस्य नृपतिः
महत् कृच्छ्रमुपागमत् ॥ १ ॥

प्रथमं जननी तस्य
मृताप्यमृतमागता* ।
पश्चात् सहोदरा नाम्ना
कमला विमलक्रिया ॥ २ ॥

महासमृद्धिं नृपतिः
निवापं मृतयोस्तयोः ।
चकार दानसन्तुष्ट-
सर्व्वजाति यथाविधि ॥ ३ ॥

शनैः शनैर्महानिष्ट-
शंसिनः समयावहाः ।
महोत्पाताः माणभृतां
भूयांसो जज्ञिरे ततः ॥ ४ ॥

दृष्टा मे भर्त्तुरीदृक्षं
दशान्तरमुपस्थितम् ।

---

* मृतापि अमृतम् अमरत्वम् आगता प्राप्ता इति विरोध, मृता अमृत मुक्तिम् आगता इति तत्त्वम् ।

इति चिन्ताकुलेवासौ
चकम्पे भूखलाचला ॥ ५ ।
ताडिताश्चार्णवा सर्वे
वात्यया तीव्रवेगया ।
अन्योन्याघातवाचाल
वीचय सञ्जुघूर्णिरे ॥ ६ ।
आहताः पोतसङ्घाश्च
भग्ना पण्यप्रपूरिता ।
भग्नाशैश्च सार्थवाहै
ममज्जुरर्णवाम्भसि ॥ ७ ।
भग्नशाखाप्रशाखाश्च
केचित् द्रुमा हृतश्रिय ।
केचिदुत्पाटिता भूमौ
पतिता अवतस्थिरे ॥ ८ ।
अवग्रहेण घारेण
पोडितानि क्वचित् क्वचित् ।
उर्द्ध्वशोषं विशुष्काणि
सर्व्वशस्यानि जज्ञिरे ॥ ९ ।
अतिवृष्ट्या क्वचित् भूमि.
भावै * स्थावरजङ्गमैः ।
सहिता जलमग्नाभूत्
शनैश्चरनिपीडनात् ॥ १० ।

* भावै – पदार्थै ।

पश्यतो नृपतेः क्रूरं
विकटं हसतः शनेः।
धूमकेतुच्छलात् दंष्ट्रा-
मयूखा इव रेजिरे ॥ ११ ।

अकारणं नृपस्येदं
पीड़नं वीच्य मत्पिता।
क्षोभं मास्म गमत्, तेन
परिवेशमिषात् शनिः
प्राकारेणेव कृतवान्
संवृतं सूर्य्यमण्डलम् ॥ १२ ।

मदन्वये प्रसूतोऽयं
श्रीवत्स इति मां प्रति
कदाचित् क्रुध्यता राहुः
शनिना संप्रयोजितः;
ग्रसेत् मामिति भीत्येव
परिधिच्छद्मनानिशम्
आत्मानमग्निप्राकार-
वेष्टितं कृतवान् विधुः ॥ १३,१४ ।

सुतशोणितधाराभिः
धरारुणकलेवरा।
मन्ये क्षितिरसृजा भिन्न-
हृदयात् गलितेन सा ॥ १५ ।

यमप्रयाणप्रहता
   पटहा इव सर्व्वदा ।
निर्घाता:* विदधुर्घोरं
   निर्घोषं हृदयच्छिदम् ॥ १६ ॥

महिषस्य कृतान्तस्य
   क्षयार्थमुपसर्पतः ।
खुरोद्धूता पांशुवृष्टी
   रविधाम तिरोदधे ॥ १७ ॥

मन्ये तथा† दिशोऽशक्ता
   द्रष्टुं भर्त्तुर्निपीडनम् ।
मलिनांशुकसंछन्न-
   मुखा इवाभवन् शुचा ॥ १८ ॥

दिने दिने समभवत्
   वज्रविस्फोटनिस्वनः ।
प्रचण्डज्वालो दिग्दाहो
   दग्धस्थावरजङ्गमः ॥ १९ ॥

मन्ये ता अक्षमा द्रष्टुं
   भर्त्तुः कष्टं तथाविधम् ।
आशाः हताशा विविशुः
   पावकं तं भयङ्करम् ॥ २० ॥

---

* निर्घाता — उत्पातविशेषाः । † तथा [illegible] ।

उन्मुखीनां शिवानाञ्च
रावियोनां निरन्तरम्।
उल्का वक्तात् विनिर्याता
विभेद विततं तमः॥ २१।

शुष्कहच्चे ग्टहच्छर्दे
निषसा वायसावलिः।
घोरं रराण हृदयं
स्फोटयन्ती प्रतिक्षणम्॥ २२।

बहुना वा किमुक्तेन
प्राग्देशोऽखिल एव सः।
दुर्भिक्षाकालमरण-
व्यसनैरर्द्दितोऽभवत्॥ २३।

श्वानः शृगालाश्च तदा
ग्टहाद्दाचक्रुपुः शवान्।
चितानलश्च संहृत्तः
तेषां हि जठरानलः॥ २४।

निर्म्माणकौशलात् ऋद्धेः
अत्यमरावतिं श्रियम्।
सर्व्वसुखसम्पद्मा
या दधौ अमरावती* ;
पतदट्टालिकाराजिः
भ्रष्टश्रीर्दुनिरीक्षणा।

अनुचक्रे पुरीमैन्द्रीं
  सञ्चरत्कौशिकेति सा* ॥ २५,२६ । युग्मकम् ।
कीलिता इव लोकानां
  कपोलेषु कराः शुचा ।
निविष्टानीव चक्षूंषि
  नासाग्रेषु निरन्तरम् ॥ २७ ।
उत्कीर्ण इव सर्व्वेषां
  कर्णेषु रोदनध्वनिः ।
हा कष्टमिति जिह्वासु
  नैसर्गिकमिवाभवत् ॥ २८ ।
उष्णाश्रुदाहभीतेव
  नृपतेर्नयनोदरम् ।
नाभजत् सुखिनी निद्रा
  लोकविश्रामदायिनी ॥ २९ ।
धवल उन्नतश्चैव
  नन्दिनानुचरेण च ।

---

* सर्व्वसुखसम्पन्ना सर्व्वेषु ऋतुषु सुखेन सम्पन्ना या अमरावती नाम सुरराजधानी निर्म्माणकौशलात् निकाषनैपुण्यात् "रूढ़े समस्तैव इतो ...रावातम अमरावतीम् इन्द्रनगरीम् अतिक्रान्ता स्वर्गपुरीविजयिनी श्रिय शोभा धृतवती, सा अमरावती इदानीम् अपदृष्टालङ्कारा पतन्ती भग्ना भूमौ ...ती अट्टालकाना राजि श्रेणी यस्या तादृशी अत एव दुर्निरीक्ष्या केवल ...तकौशिका सञ्चरत् आरण्यकौशिकत्वात् इतस्ततः परिभ्रमन् प्रभुत्वात् विचरन् ...एव पेचक इन्द्रश्च यस्यां सा इति द्वेती ऐन्द्रीं पुरीम् अनुचक्रे अनुकृतवती, ...सर्व्वं सादृश्य प्रकटमित्यर्थः ।

संवृतो भूतिसम्पन्ने-

स्वररस्यो जयान्वितः ;

यः सर्व्वमङ्गलाधारो

विजयानन्दवर्द्धनः

प्रासादः शुशुभे पूर्व्वं

कैलासाद्रिरिवापरः ;

सोऽनु चक्रेऽधुना तस्य

सत्वरच्छिव इत्यहो॥* ॥ २०,२१ ।

चिन्ता चिन्ता च सततं

हृदये जाग्रती स्थिता ।

पीयूषवर्षिण्येकासीत्

अपरा विषवर्षिणी† ॥ २२ ।

. चिन्तासतीत्वमहसा

परिस्फुटतनुः शनिः ।

---

* धवल शुभ सम्रत छन्न नन्दिना आनन्दिना पक्षे नान्दीर भृत्यवर्गेण पक्ष प्रमथविभवेण सहत व्याप्त भूतिसम्पन्ने श्वररस्य भूत्या सम्पद्‌ा तत सम्पन्न य ईश्वर प्रभु श्रीवत्स महादेवश्च तन रम्य मनोहर जयान्वित जय मनुजयन जयया तन्नाम्ना प्रियानुचर्य्या अन्वित युक्त सर्व्वमङ्गलाधार सर्व्वे मङ्गलानाम सर्व्वमङ्गलाया पार्व्वत्याश्च आधार आश्रय विजयानन्दवर्द्धन विजय विजयया च आनन्दवर्द्धन य प्रासाद राजभवनम अपर कैलासाद्रिरिव शि ागारारव पूर्व्वं शुशुभे, स प्रासाद अधुना अहो सत्वरच्छिव इति सत्वरन्तौ शि वनक्रीडनात् प्रयातौ पार्व्वती च यस्मिन् तादृश इति इति हेतो तस्य कैलास त कैलाससमिश्रयं अनुचक्रे अनुकृतवान्, अन्यत् सादृश्य काप गतम्।

† एका चिन्ता देवी पीयूषवर्षिणी, अपरा तु अन्या विषवर्षिणी च आसीत्।

ध्यन्तर्देहे सदा देहे
  नृपतेर्लङ्घनाचमः ॥ ३३ ।
अनिवत्रानलप्लुष्टः
  चिन्तयामृतधारया ।
उज्जीवितो यथा भूपो-
  ऽसुष्टवंत् समजायत ॥ ३४ ।
चिन्तासतीत्वरूपेण
  तेजसा च नियोहितः ।
शनियापि तथा माता
  छायया स्निग्धतां गतः ॥ ३५ ।
चिन्तायाः सन्निधौ सौरी
  राज्ञश्छायामपि क्षणम् ।
स्प्रष्टुं नाल, तद्वियोगे
  बुद्धिमेवममूमुचत्* ॥ ३६ ।
जीवामि किम् ? नहि, तथा न वयं भजामि
  जीवन् जनो भजति यत् सुखमत्र लोके ;
नष्टास्मि ? किमहं न लभे निवृत्तिम्
  दुःखानलात् ? अतजनो लभते ध्रुवां याम् ;
मन्ये ततो वपुरिदं खलु जङ्गमा सा
  जातानिशं ज्वलदनल्पशिखा चिता हि ;
दूये न तेन ; कथमेवमवेक्ष्य दुःखम्
  नृणां धियेऽप्रतिविधेयतयातिघोरम् ॥ ३०,३८ ।

---

* एव वल्लभाचबचारेण ।

अविदितगतिमार्गश्चिन्तया तत् चपार्थां
निविड़गहनमेष त्यक्तराज्यो व्रजामि।
यदि हरिमहिलाया आनुकूल्यात् कदाचित्
भवति तरणिसूनूर्मुक्तवैरः प्रसन्नः ;
दर्शान्ते तदिमां विलोक्य मलिना क्षीणामिवेन्दोः कलाम्
आगम्यानुभवामि निर्वृतिमहं, तिष्ठत्वसौ सांप्रतं
गेहे दुःखपरायणा ; नहि पुनश्चाहं युवत्यानया
दुःखात् दुःखतरं भजामि, नृपतेरेवंविधाभूत् मतिः॥ १२८ ॥*

इति श्रीश्रीवत्सचरिते महाकाव्ये राज्ञो वनगमनाभिलापो नाम षष्ठः सर्गः।

---

* तत तदा आगम्य मनो प्रसन्ने प्रत्यागत्य दर्शान्ते अमावस्याप्रान्ते इन्दो चन्द्रस्य कलामिव मलिनां पतिविरहविधुरा क्षीणां कृशाम् इमां चिन्ता विलोक्य अहं निर्वृतिं परमानन्दम् अनुभवामि अनुभविष्यामि, असौ चिन्ता साम्प्रतम् इदानीं दुःखपरायणा गेहे तिष्ठतु, अहं पुनः अनया देहलतीकाकल्पया युवत्या सह गच्छन् इतः शेष दुःखात् दुःखतर नहि भजामि, एतस्या विपद समुत्तर्तुकाम अपरस्यां विपद न पतिष्यामि, नृपते एवंविधा मतिः बुद्धि अभूत मनिमायया इति शेष।

इतरत् शतं प्रसहतेऽप्ययमर्मणां
तव कष्टमोचितुमयं ननु क्षमः ॥ ५ ।

गृहशोभिनी वस गृहे निरर्थकं
न परिभ्रम प्रियतमे ! वने वने ।
जलविच्युतेव नलिनी न जीविता
गमितातिकष्टमबले ! भविष्यसि ॥ ६ ।

अवरोधनित्यवसतेर्विशोषका-
तपमारुतप्रजुष एव कानने ।
क्षणदाविशोभिविधुविम्बविभ्रमं
भविता मुखं ग्लपितकान्ति तन्वि ! ते * ॥ ७ ।

इति भूमिपोऽप्युपदिशन् नृपात्मजां
न निषेद्धुमाप विभुतां तदुद्यमात्
प्रतिरोद्धुमिष्टमधिगन्तुमुत्सुकां
क इरावतीं प्रभवति द्रुतं यतीम् † । ८ ।

तरुमूल एव दधती विलासभू-
प्रियतां, विलेपधियं च धूलिषु ।

---

* हे तन्वि ! अवरोधनित्यवसतेस्तव क्षणदाविशोभिविधुविम्बविभ्रमं राविशोभमानचन्द्रतुल्यं मुखं कानने विशोषकातपमारुतप्रजुषः एव सत्या ग्लापितकान्ति भविता ।

† भूमिपः नृपात्मजां इति उपदिशन् अपि तदुद्यमात् वनगमनोद्यमात् निषेद्धुं निवारयितुं विभुतां सामर्थ्यं नाप न प्राप्तवान् निवारयितुं न प्रभावः इत्यर्थः, तथाहि कः को जनः इष्टं पतिं समुद्दिश्यार्थं, अधिगन्तुम् उत्सुकां द्रुतं यतीं गच्छन्तीं इरावतीं तन्नामधेयां प्रतिरोद्धुम् प्रभवति समर्थो भवति ?

परिवारहार्दममलं मृगादिषु
प्रियसंगता नृपसुता वनं ययौ ॥ ९ ।

अनया जगत्प्रथितरूपसम्पदा
सह तां निशां वनचरैरलक्षित: ।
अतिवाहये कथमिति चितीश्वरो
विकलेन्द्रिय: समजनि क्षणं तदा ॥ १० ।

सुखसाधनव्रतपरैरसंख्यकै:
परिवारिता परिजनैर्गृहेषु या
ससुखं निनाय समयं निरन्तरं
परिलालिता प्रियतमेन शार्ङ्गिना ;
गहनेषु जन्तुभिरतीवभीषणै:
परिवारितेषु च तया समन्तत:
भ्रमतोऽनिशं चितिभुज: सचेतसा-
मनुमेयता व्रजति मानसी व्यथा ॥ ११,१२ ।

न तां विनान्यां भजते कदाप्यसौ
स एव चिन्तामणिरस्य चक्षसि ।
तमोवहा सैव गृहेषु कौमुदी
तदेव दृष्टेरमृताञ्जनं परम् ॥ १३ ।

पदे पदे तां मियत: स्खलद्गतिं
नृपस्य दद्रे हृदयं शुचां भरै: ।
दृशा प्रियायाय निगूहतो व्यथां
प्रसभता कष्टतराभवत् छलात् ॥ १४ ।

क्रमेण राजा सह चिन्तया तया
प्रदर्शिताध्वा हिमरश्मिरश्मिभिः ।
ददर्श मार्गे गतिरोधकारिणीं
तरङ्गिणीं तुङ्गतरङ्गभीषणाम् ॥ १५ ।

इयं नदी सुप्रतरा न चिन्ते !
नौकापि काचित् नच दृश्यतेऽस्याम् ।
भयङ्करोऽयं वनभूमिभागः
वामाक्षि ! वामे कुरु दृष्टिपातम् ॥ १६ ।

ज्वलच्चितावह्निशिखाविभावितं
समाश्रयन् कुत्रचिदेकमामिषम् ।
असोढनादोऽखिलपार्श्वजन्तुभिः
शुना गणोऽयं कलहायते मिथः ॥ १७

अकण्टकं कर्तुमनाः स्वमामिषं
क्वचित् समन्तादभियाति कश्चन ।
अथापरः श्वा द्रुतमेत्य चान्यतः
तदेव भुङ्क्ते सभयं विलोकयन् ॥ १८

क्वचिच्चलत्कौशिकघुत्कृतिश्रुते-
स्त्यजन् स्वपक्षेण तिरोदधत् शिशून् ।
स्वदेहसंलीनवपुः समाकुलो
निशावसानं करटः प्रतीक्षते ॥ १९ ।

क्वचिच्च काश्मीरकिशोरप्रभैः
समाचितायां भुवि लोलविग्रहम् ।

*कलध्वनिः श्रोत्रसुखैः कुहूरवैः*
कणत्तुलाकोटिरलिव्रजस्वनैः * ।
सुमेखला त्वं कलहंसकालिभिः
किमित्यकाण्डे वद तर्हि रोदिषि ? २४,२५ ।

पतिश्च ते विश्वपतिः पतिव्रते !
त्वमेव नित्यं वशवर्त्तिभर्त्तृका ।
*अरोदिषि त्वं यदि, किं वदाम्यहो*
सतीं वराकीं नृपनन्दिनीमिमाम् ! २६ ।

इति ब्रुवन्तं तमुवाच चिन्ता
कुरुष्व तावत् प्रिय ! दृष्टिपातम् ।
इयं नदी मामुपदिश्य याति
पतिं सदा राघव भूपयेति ॥२७ ।

*अलकैर्वृतगण्डमाकुलैः*
दधती वक्त्रसरोरुहं सती ।
अथ सा प्रतिबोध्य तां नदीं
गदितुं प्राक्रमतैवमादरात् ॥ २८ ।

क नु यासि नगेन्द्रसम्भवे ।
कलकल्लोलिनि ! भङ्गभङ्गतः† ।
सुरुचिः खलु सा प्रसाधिका
तव यैवं विदधे प्रसाधनम् ॥ २८ ।

---

* कणत्तुलाकोटि —कणन्त्यः शब्दायमानाः तुलाकोटयः नूपुराः यस्याः सा ।
† तरङ्गभङ्गात् ।

रुचिरां शुचिपुष्पगुम्फितां
  द्रुतमानीय ददामि तां स्रजम् ॥ २५ ।

मधुरा मधुलुब्धषट्पदा
  मरुता गीतगुणा प्रतिक्षणम् ।
प्रतिभास्यति सा भवत्प्रियो-
  रसि चारुस्तनयित्नुकान्तिनि* ॥ २६ ।

अथवा किमनेन निम्नगे ।
  सुममाल्येन† फलं भविष्यति ।
कुसुमं नहि यस्य मञ्जुतां
  भवते विप्लुतकान्ति वारिभिः‡ ॥ २७ ।

अयि ! धुनि ! मणिमुक्ताहारयष्टिं गृहाण
  प्रियतमवरकण्ठं प्रापयैनां कृपालुः ।
इति निगदितवल्गुन्मुच्य सा कन्धरायाः
  तृणमिव बहुमूल्यां तां निचिक्षेप तोये ॥ २८ ।

इत्थं प्रमत्तेव नरेन्द्रबाला
  मत्वा निषिद्धापि ससम्भ्रमं सा ।
हारं निचिक्षेप च कोपि नौकाम्
  आनीय तस्थौ च पुरो निषादः ॥ २९ ।

---

* चारुस्तनयित्नुकान्तिनि—चारु मनोज्ञ स्तनयित्नु मेघः तस्य कान्तिः शोभेव कान्तिर्यस्य तत्र तस्मिन्, उरसि इत्यस्य विशेषणम् ।

† सुममाल्येन—सुम कुसुम तस्य माल्य तेन।

‡ अस्य सुममाल्यस्य कुसुमं वारिभिः विप्लुतकान्ति म्लानसौन्दर्यं सत् मञ्जुतां मनोज्ञत्वं नहि भवते प्राप्नोति । भवतेः प्राप्त्यर्थकत्वात् पाक्षिकम् आत्मनेपदित्वम् ।

इमां तितीर्षो. पुरतस्तरङ्गिणीं
सहायतां द्राक सपरिग्रहस्य* मे ।
कुरुष्व तावत् तरणातरं नु किम्-
मितिं वदाज्ञाय तरिं समानय† ॥ ४० ।
श्रुत्वा निषादो नृपतेर्वचस्तत्
भारासरामेत्य च विस्मितात्मा ।
"कस्त्वं रजन्यामतिभीषणायां
नारीसमेतो भ्रमसि श्मशाने ? ४१ ।
मन्येऽपरस्य दयितामपहृत्य रात्रौ
त्यक्ता भयादनुसृतेः‡ शठ ! राजमार्गम् ।
आश्रित्य दुर्गमपथं परिमुक्तशङ्को
लोकैरलक्षितगतिः प्रपलाय्य यासि ॥ ४२ ।
मानवानामगम्येयं
भूमिस्त्वं स्वस्त्रिया सह ।
अत्रागतस्त्यक्तगेहः
सप्रत्ययः कथं भवेत् ॥ ४३ ।
चिताभस्माचिता शुभ्रा
वेसक्षोमभुजङ्गमा ।

---

* सपरिग्रहस्य—सपत्नीकस्य ।

† किमिति—किर्यात्माण तरणातर पारगमनशक्रम षष्ठाय भ टिति वद, कियता भारतेण तन्तुष्टस्त्वं सस्त्रीकं मा नदीपार नेष्यसि कथय, तार नौका समानय मत्समीपमानय इत्यर्थः ।

‡ अनुसृते अनुसरणात् भवान मह्या कदाचित् कश्चित् मा दिशोवेंयां अनु सरेत् इति भयेन इत्यर्थः ।

कपालास्थिसमाकीर्णा
  क्रोड़सुप्तविनायका ;
नृत्यद्भूतगणा हर्षात्
  शिवया परिवेष्टिता
प्रेतभूमिरियं पश्य
  रौद्रा रौद्री तनूरिव* ॥ ४४,४५ ।
शवदेहात् पच्यमानात्
  अग्निमुद्दीप्य संगलत् ।
आचामति महातैलं
  पश्य प्रेतोऽतितृष्णया ॥ ४६ ।
अर्द्धदग्धं भुजं काचित्
  शवादाच्छिद्य यत्नतः
नृत्यन्ती च हसन्ती च
  पश्य प्राश्नाति पूतना ॥" ४७ ।

* चिताभस्मचिता चिताया भस्मना विभूत्या चिता व्याप्ता (उभयत्र समानम्) अतएव धूम्रा धूम्रवर्णा (पूर्ववत्) वेल्लद्भीमभुजङ्गमा वेल्लन्तः चपलाः भीमाः भीषणाः भुजङ्गमाः सर्पा यस्यां तादृशी (एकत्र सर्पभूषणा अपरत्र सञ्चरत्सर्पा) कपालास्थिसमाकीर्णा (एकत्र नरकपालधारिणी अस्थिमालाविभूषिता, अपरत्र नरकपालैः अस्थिभिश्च व्याप्ता) क्रोडसुप्तविनायका एकत्र क्रोडे अङ्के सुप्तः निद्रितः विनायकः गणेशः यस्याः सा तथोक्ता अपरत्र क्रोडे समन्तात् सुप्ताः रात्र्यन्धत्वात् निद्रिताः विनायकाः पक्षिश्रेष्ठाः मांसाशिनः शकुनयो यस्याः सा तथोक्ता हर्षात् आनन्देन नृत्यद्भूतगणा नृत्यन्तः भूतगणाः प्रमथाः पक्षे श्मशानचारिणः दैवयोनिविशेषा यस्याः तादृशी, शिवया परिवेष्टिता एकपक्षे शिवया पार्वत्या अपरपक्षे शृगाल्या परिवेष्टिता समार्थी रौद्रा भयङ्करी रौद्री रुद्रसम्बन्धिनी शिवसम्बन्धिनी तनूरिव शरीरमिवेयं प्रेतभूमिः श्मशानभूमिर्वर्तते पश्य इत्यर्थः ।

इत्येवं वादिनस्तस्य
चिन्ताचिप्य वचस्ततः ।
उवाच त यथा राज्ञो
ब्रवीति हि कृतागसम् ॥ ४८ ।

"अनात्मवेदिन् रे जाल्म !
विरमातिप्रसङ्गतः
यमेवं वदतो मूढ़ !
तव चादः कलेवरम्
एतावतापि कालेन
न प्रयाति कबन्धताम् ;
सोऽयं प्रागदेशनृपतिः
श्रीवत्सः श्रीप्रियः सदा
चित्रसेनसुता चाहं
चिन्तास्य सहधर्म्मिणी ॥" ४९,५० ।

"स राजा सिद्धवेतालः
इति सर्व्वत्र विश्रुतिः
कथमेवमवस्थोऽसौ ?
न मे प्रत्येति मानसम् ॥" ५१ ।

"विना दोषं विरूपेण
शनिना च नृपोत्तमः ।
सस्त्रीकोऽसौ शोचनीया-
मीदृशां गमितो दशाम् ॥" ५२ ।

"विना दोषं कथं देवः
राज्ञेऽस्मै देवि! कुप्यति?
एवंवृत्तः कथं वासौ
देवलोके वसन् सदा?" ५३।

"प्रकृतिं दुस्त्यजां विद्धि,
न केनापि तदन्यथा।
पूते जले वसन् मत्स्यो
विस्रगन्धं न मुञ्चति॥" ५४।

स उत्तीर्य ततस्तीरं
विनयात् नृपमब्रवीत्।
त्रीणि वस्तूनि नौका मे
धारयितुं नृप! क्षमा॥ ५५।

राज्ञीकक्षगतां कन्थां
कथमुत्तारयाम्यहम्।
कियद्वारामिमां देवि!
देहि पश्यामि मानतः॥ ५६।

समादाय च तां हर्षोत्-
फुल्लनेत्रोऽभवत् तदा
कन्थेयं रत्नपूर्णा मे
दिष्ट्या हस्तं समागता
तिष्ठ राजन् साधयामि
प्राप्यं प्राप्तोऽस्मि यत्नतः॥ ५७।

रत्नराशिमपहृत्य दस्युवत्
क प्रयासि मम पश्यतोऽधम !
ऊचिवानिति शनिं बलादसौ
उत्पतन्तमवरुह्य पादयो: ;
चेप्तुकाम इभविक्रम: चितौ
विस्मित: चितिपतिर्व्यलोकयत् ।
सौरिमाश्रिततनुं नभ:स्थितं,
ता नदीं न, न तरिं, न तद्वनम् ॥ ५८ ।

क सा लक्ष्मी याता शशधरकुलाङ्गार ! नृपशो !
सभायां मत्तोऽवोद्वधदतिचलां यामपशुणाम्* ।
शिरस्येवं ते, ते शनिरशनिरेष प्रतिदिनं
पतंस्तोन्नाघातं व्यथयति पुरा† विद्धि महिषि ॥ ५९ ।

सस्लोकं नृपमित्युक्त्वा
सौरिर्दुर्वैरितेचणम् ।
सासूयं चिन्तया दृष्ट:
तत्रैवान्तरधीयत ॥ ६० ।

इति श्रीश्रीवत्सचरिते महाकाव्ये कन्यापहरणो नाम
सप्तम: सर्ग: ।

---

* मत्तानाव शप. । † व्यथयात पुरा—व्यथयत्यति ।

## अष्टमः सर्गः ।

---

व्यपेतकन्या गतहारयष्टि-
श्छिन्ना न चिन्तामगमत्, ततोऽसौ ।
तथाविधाभो रविसूनुवाग्भि
र्विपक्षचित्तं पतिमित्युवाच ॥ १ ।

गुणैः शतेनाम्बुधिजा प्रभावे
शनेश्वरं नाथ ! रमातिशेते ।
तत् तन्मुखाम्भोजसमीरितं तत्
वचोऽमृतं संस्मर, धैर्य्यमाप्नुहि ॥ २ ।

भयो विपत्सम्प्रनिवर्त्ति भद्र'
भवत्यल दर्शयितुं न वासौ ।
गुणेषु शान्त्यादिषु तेषु तेषु
प्रेमेति मन्ये व्यसनं तवैतत् ॥ ३ ।

तद्धैर्य्यमास्थाय परां विपत्ति-
मुत्तीर्य्य सम्यक् प्रकटीकुरुष्व ।
तदात्मतत्त्वं, ननु येन लोको
मृतोऽपि लोकेऽमृतवत् बभूव ॥ ४ ।

त्वणाय मन्ये ननु सूर्य्यसूनुं
तस्यां मयि त्वत्पुरतः स्थितायाम् ।

न शक्तिरस्याक्रमितुं कदा ते
  छायामपि प्राप्तवतोपि रन्धुम् ॥ ५ ।
इत्थं तया दीपितचित्तवृत्ति-
  र्नृपः स्मृतश्रीवचनैस्तदानीम् ।
विघ्नातमार्गः पथिकान् सदारो
  हृष्टस्ततः कौतिपुरं प्रतस्थे ॥ ६ ।

प्रौढत्वमागात् क्रमशो दिनश्रीः
  पथश्रमेणातपबाधया च ।
चिन्तां परिक्लान्ततरां विलोक्य
  जगाद मर्मोपहतः प्रकामम् ॥ ७ ।
घर्मांशुरेषोऽम्बरमध्यवर्त्ती
  ललाटमुत्तेमतपति प्रचण्डैः ।
छद्वे जयत्येव नितान्ततप्तः
  पादाङ्गुलीन्ते वत राजमार्गः ॥ ८ ।
छायापि मन्ये नहि सोढुमीशा
  प्रचण्डतापं, कथमन्यथासौ ।
संकोचमापाद्य शरीरयष्टिं
  प्रलीयते पादतलेऽध्वगानाम् ॥ ९ ।
घर्मार्द्रकायः परिदूनपादो
  वहेव भारं व्रजति प्रयासात् ।
किमेष भारो वत मारत्विषो
  यद्गि प्रियेऽस्मिन् कुरु कर्णपातम् ॥ १० ।

"श्वायं सुखं तिष्ठति लब्धनिद्रो
न कार्य्यतो मेऽप्यधुना निवृत्तिः ।
स्थाने स्वभावेचपलब्धवर्णाः
सेवामतिश्वीं* प्रवदन्ति धीराः ॥" ११ ।

छायां समाश्रित्य लभस्व शान्तिं
न ते भयं पान्थ ! रवेरिदानीम् ।
न स्त्रोविधेयस्य महोदयस्य
भार्य्याश्रितः क्लाम्यति कोपि लोके† ॥ १२ ।

औद्धत्यं परवसुयोगतो विनिन्द्यं
मा मैवं चपल ! समीर ! मूर्ख ! कार्षीः ।
भित्तेभिन्नपरदिगङ्गनाऽऽत्तसारे
कीदृक् ते स्मर भविता दशा दिनान्ते‡ ॥ १३ ।

उत्तप्तस्तपनकरैः खलोक्तितीक्ष्णैः
उद्दामश्वसनसमागमेन नुन्नः ।

---

* अतिश्वीम्—श्वानं कुक्कुरम् अतिक्रान्ता अतिश्वी ताम्, प्रभुसेवा कुक्कुरसेवेरपि निकृष्टा इत्यर्थः ।

† यः धनिकस्य भार्य्यामाश्रयति तस्य न तु खम, स्त्रीपरतन्त्रो धनी "अयं मे भार्य्यायाः प्रिय" इति तस्य सर्व्वक्लेशं निवारयितुं सर्व्वथा यतते, हे पथिक ! त्वं छायाम् आश्रितोऽसि, इदानीं ते रविसन्तापभयं नास्ति छाया रवेर्भार्य्या रविमंडलस्या भार्य्याश्रितस्य ते कथम् आतपबाधा भविष्यति इत्यर्थः ।

‡ हे समीर ! चपल ! परवस्तुयोगेन सुगन्धवस्तुसम्पर्केण एवं त्वं मम लोकानाम् अपवादं मा कार्षीः, सायंकाले सूर्य्ये अस्तं गते ईदृशी उत्तप्तता न स्थास्यति, यः परधनेन धनी भूत्वा गर्व्वितो भवति, परांश्च निर्धनतां गते स.

आलरेहमिव वोढ़ुमनीषा
 शुक्ललम्बिचिकुरा सुतधर्मा।
आतपक्षमविवर्णमुखश्रीः
 मत्कृते भ्रमति घोरनिदाघे ॥ २० ।

पवित्रशीला सुरहोतनाम्नी
 सदा सदाचाररता कुलीना।
साध्वीगुणाढ्या गृहकर्मदक्षा
 प्रियंवदा निर्मलचित्तभावा;
लज्जाविभूषा कमनीयमूर्त्तिः
 मन्दस्मितव्यक्तशरदिन्दुः;
सदा शरण्या शरणं गताना
 मर्त्येषु दाक्षिण्यवती निकामम्;
परोपकाराध्वरदीक्षितेव
 भाग्येष्वनुत्सेकवती विनम्रा
वात्सल्यमिष्टेऽवरजेऽनुरूपं
 भक्तिं प्रतीक्ष्येषु समेषु सख्यम्
नित्यं दधाना; सदने चरन्ती
 यालक्ष्यत प्राक् गृहदेवतेव
अधन्यताया मम सैवमेव
 दुःखायते धिक् न तथापि दीर्ये ॥ २१—२४ ।

इत्येवमन्यच्च विचिन्तयन् सः
 श्रामो नितामं क्षुधया तृषा च

कियन्तमध्वानमतीत्य पत्न्या
चित्रध्वज नाम वनं विवेश ॥ २५ ।
प्रान्तेषु वानीरवनेन नद्धं
क्रीड़द्विहङ्ग* रमणीयमेकम् ।
दृष्ट्वा सरः प्राक् मुमुदे नृपोऽसौ
पश्चात् विषण्णः स्मृतसौरिमायः† ॥ २६ ।
प्रिया प्रविष्टामनुसृत्य राजा
सस्नौ विगाह्य: सरसीं यथाह्य ।
कृताह्निको भक्तिरसार्द्रचेताः
इष्ट यथावत् समपूजयच्च ॥ २७ ।
क्षुध. प्रतीकारमसौ सदारः
कृत्वा फलैस्तत्र सुखेन लब्धैः ।
• जलं कपोतत्वं‡ निपीय दृप्तः
क्षणं विशश्राम विशन् निकुञ्जम् ॥ २८ ।
ततो दिदृक्षुः सुषमां वनस्य
नृपः सदारः परितश्चचार ।
क्वचित् वसन्तेन मनोज्ञदर्शी
दृष्ट्वा च भूमि स्थितवान् विमुग्धः ॥ २९ ।
शनिकृतामविपद्यमनोहर्जं
नरपतिः परिहर्त्तुमनास्ततः ।

* एतत रम्य सरो.'प शनिमायया कृत न वास्तव इति चिन्तया दुःखितोऽभूत् ।
† कपोतस्य वा पिपासामात्रेण पीला । तस्यैव कवे इत्यथयम् ।
‡ परमः शीमान् ।

मधुभवां सुषमां परिदर्शयन्
  प्रियतमां विकला समबोधयत् ॥ २० ।

विकचपङ्कजसौरभलोलुप-
  भ्रमरसंहतिगीतगुणस्तुतिम् ।
रुचिरपल्लवसंवृतविग्रहां
  वनतति नु विलोकय वल्लभे ! ॥ २१ ।

सदयभर्तृसमागमनिर्वृता
  स्वतनयामवलोक्य वनस्थलीम् ।
प्रकृतिराकुलता जहती मुदा
  वितनुते विशदं सुखमण्डलम् * ॥ २२ ।

प्रकृतिमेवमवेक्ष्य हसन्मुखीं
  पिककुलं मधुरं शृणु गायति ।
मलयमारुतशिक्षितविभ्रमा
  सुललितं व्रततिर्मिष † नृत्यति ॥ २३ ।

मदकलं कुसुमेषु च नन्दते
  मधु निपीय रतं मधुपान्वयः ।
प्रमुदिते ननु भर्त्तरि जायते
  परिजने सुखभुक्तिरयन्त्रिता ॥ २४ ।

कमलनालनिबद्धपदस्खलन्
  विधुतपक्षतिराकुलनिस्वनः ।

* प्रकृति स्वतनया वनस्थलीं सम्यग्भर्तृसमागमनिर्वृताम् अवलोक्य मुदा हर्षेण व्याकुलतां शिशिरकालकृत कलुषभावं जहती त्यजन्ती विशदं स्वच्छं सुख मण्डलं वितनुते प्रकटयति । सुखमण्डलं वदनमण्डलं दिङ्मण्डलञ्च ।

† मिष—इति च पाठः ।

विमनसा प्रियया विसभक्षणात्
विरतया मिलितः कलहंसकः ॥ २५ ।
उपचितायतिरेष रविः पुनः
समधिकद्युतिरम्बुजिनीसखः ।
इह भवे वद कस्य न पद्मिनी-
शुभसमागतिरभ्युदयाय वा* ॥ २६ ।
कमलिनि ! त्वदृते शिशिरे सति !
व्रजति कामपि दीनदशां रविः ।
तदतियुक्तमनेन विना विधो
र्यदसि सोढुमलं नहि दीधितिम्† ॥ २७ ।
समभिवीक्ष्य रवेः करलालितः
प्रमुदितं विधुरप्यतिशोभते ।
कृतमहोपकृतेर्हि महोदये
भवति हर्षभरः कृतवेदिनाम्‡ ॥ २८ ।

---

* यः शिशिरे पद्मिनीविरहात् अल्पायुः निस्तेजाश्च अभवत्, स एव रविः अम्बुजिनीसखः पद्मिनीसखः पुनः उपचितायतिः वर्द्धितायुः समधिकद्युतिश्च जातः । तथाहि इह भवे पद्मिनीशुभसमागतिः तादृश्याः नायिकायाः सङ्गमः कस्य वा अभ्युदयाय उत्कर्षहेतवे न भवति । शिशिरे पद्मिन्याः अभावात् रवेः तादृशी दीनावस्था, वसन्ते तत्समागमात् अभ्युदयः । पद्मिनी श्रेष्ठा स्त्री तन्नाम्ना ख्याता नायिका च ।

† हे सति ! कमलिनि ! शिशिरे रविः त्वदृते त्वया विरहितः कामपि अनिर्वाच्यां दीनदशां व्रजति, तत् अनेन रविणा विना यत् विधोश्चन्द्रस्य दीधितिं सोढुं बलं समर्था न असि इति यत् तत् अतियुक्तम् एतादृश्य एव विरहे हि मान्यो कर पतिव्रतायाः लक्षणमेव ।

‡ अयमर्थः चन्द्रस्यापि शोभा समधिका इति भावार्थः । रवेः करलालितः

मलयगोत्रभवो मधुसंगमात्
कुसुमितामपि चूतलतां मरुत्।
स्पृशति चेत् नु कथं करटैः समं
गतवयाः पिक एष न माद्यति ॥ ३८।

शिखरनियन्लीनमधुव्रता
नवरसालमनोहरमञ्जरी।
इषुरिव प्रतिभाति च धन्विनी
निशिततीव्रशिलीमयदाननाः* ॥ ४०।

क्रकचदन्तुरमुग्रविलोकनं
भ्रमयता वकुल नभसि घनम्।
विदधता ननु कोपविनिःसृतं
कुरवक मधुना प्रतिभायते ॥ ४१।

इत्थं वसन्तसुषमामवलोकयन्तीं
निद्रानिलोड़नयना दयिता समीक्ष्य।
राजा द्रुतं रचितपर्णकुटीरमेकम्
आस्तीर्णपत्रशयन विधृतां निनाय ॥ ४२।

इति श्रीश्रीवत्सचरिते महाकाव्ये चित्रध्वजवनाभि-
गमनो नाम अष्टमः सर्गः।

---

करपालित विधुराप चन्द्रोपि न रवि प्रसादतम् आभवोत्य इहा चांतमीभवं भासानन्दः भासनमाव कहाति, क्रतवोदनो क्रतकानां क्रतमहोपकतैः क्रनल महोदये, इडो हर्षभर हर्षातिरेक' भवयेर रविकरपालितचन्द्र क्रतम, चतसल उपकारिण सूर्यस्य अभ्युदये हर्षातिरेक, युक्त एव इति भावः।

* निशितया तीव्रया शील्या मयदम् आनन यस्याःसादृशी।

## नवमः सर्गः ।

गायद्भिराश्रितमहीरुहरम्यशाखैः
सूतात्मजैरिव खगैः प्रतिबोध्यमानः ।
पूर्व्वाद्रिमुक्तशयनो नृपतिर्विपश्चो
द्रष्टुं समारभत राजसुतां शयानाम् ॥ १ ॥

किञ्चिच्छ्लथं कनकपुष्पविशोभिमध्यं
कृष्णं भुजङ्गमिव कुण्डलितं सरत्नम्
सीमन्तित रुचिरबन्धविशेषरम्यं
धम्मिल्लमीषदिव ᳵ विप्लुतभङ्गिभावम् ;
स्वेदोदबिन्दुनिचयै र्निचित ललाटं
हीराङ्कुरैरिव लसत् कलधौतपट्टम्
अर्द्धस्फुटाचलशिलीमुखपक्ष्मसुग्धम्
आमीलितं स्थिरकनीनिकमक्षियुग्मम् ;
बिम्बाधरं श्वसितवेगविकम्प्यमानं
सञ्जातलास्यमिव पल्लवमत्युदारम्
गण्डद्वयञ्च दधतो परिपाकपाण्डु
चूतं रसार्द्रमिव, सच्छलदच्छकान्ति ;
निष्यूतहीरकसमुज्ज्वलकान्तिपुञ्ज-
ग्रैवेयकेण नितरां प्रतिभिन्नशोभम्
ईषत् विवर्त्य वलिमत् कमनीयकण्ठम्
आलानबन्धनमिवेचणवारणस्य ;

वामेतरं वलयरत्नमरीचिभासा
  हस्तं समुद्गतसुरायुधमम्बुजाभम्
भाले निवेश्य शयितां श्लथलम्बपातं
  सव्यं निपात्य शयनेऽर्द्धहृताङ्गयष्टिम् ;
या वल्लभां नृपवरः प्रथमं प्रवुद्धः
  दृष्ट्वा पुरा समभवत् परितृप्तदृष्टिः
तामद्य भूमिपतितामकृताङ्गरागा
  दद्रे नृपस्य मिपतो* हृदयं सरागम् ॥ २—७

कान्ते ! मदर्थपरिमुक्तसुखोपभोगे !
  प्रोन्मीलयेक्षणयुगं रजनी प्रभाता ।
इत्यश्रुदिग्धनयन सदय प्रियाङ्गम्
  आपादपद्ममसकृत् स परामम्रर्ष† ॥ ८ ।

जृम्भाविकस्वरमुख नृपपाणिसङ्गात्
  गात्र विभेद कृतकुञ्चनसम्प्रसारम् ।
आकूनितेन नयनेन च वल्लभास्य
  सस्तम्भितेव दयिता क्षणमैक्षतासौ ॥ ९ ।

जातस्मृतिर्मुखरभूषणमूर्द्धवाहु
  स्मेरानना झटिति पार्श्वविवर्त्तमागात् ।
मन्ये रवम्मधुकरं नलिनी सरम्याम्
  अन्या दिशामभिपतत्यनिलाहताङ्गी ॥ १० ।

पूर्व्वाङ्घिमुक्तशयना परिवर्त्त्य कण्ठम्
  आभुग्ननालनलिनप्रतिमास्यविम्वा ।

* मिषत —पश्यतः । † परामम्रष—पस्पर्श ।

पर्य्यश्रुणो नरपते र्नयने विलोक्य
पप्रच्छ कारणमिय रुदितस्य चिन्ता ॥ ११ ।

हेतुं शुचो दयितया परिपृच्छ्यमानो
राजाब्रवीत् प्रियतमे । कथयामि किं ते ।
जाने शनिर्भ्रुकुटिभङ्गकरालवक्त्रो
मामेवमम्बरगतो निजगाद सुप्तम् ॥ १२ ।

श्रीवत्सभूपतिरतीवविचारदक्ष:
पक्षाश्रयित्वमपहाय विनिन्द्यमेय: ।
मीमांसते श्रुतिपरायण इत्यवेक्ष्य
त्वय्येव बर्ब्बर । गतो ननु तिष्ठमान.* ॥ १३ ।

आसीत् तदा सरसि नौ अधिकृत्य श्रैष्ठ्यम्†
लक्ष्म्याश्च मे च कलह' क्रमवर्द्धमान: ।
वित्ताधिदैवतमिति प्रकृत व्युदस्य
मत्त. श्रिय छलपर' समवीवृधस्त्वमङ्‡ ॥ १४ ।

मत्तोऽधिका यदि रमा चपलाचिराभा
वैधेय । किं तत इयं क्षमते न मत्त:
चातु भवन्तमपराज्यमपास्तशक्तिं
भ्राम्यन्तमेवमधुना महिमोद्वितीयम् ? १५ ।

त्रेतायुगे जलधिजा जनकात्मजाभूत्,
सा मत्प्रभावपिहिताखिलमहानुभावा

---

* तिष्ठत्वेन त्वाम् आश्रितवानस्मि , तिष्ठतेर्गत्यर्थे आत्मनेपदम्. ।

† प्राधान्यम् ।

‡ वाढ्वतवानास ।

नक्तंचरीभिरनिशं परितुद्यमाना
रक्षोगृहे चिरमतिष्ठदशोकवन्याम्* ॥ १६ ॥

सन्दीप्य मद्रूपमसौ जगतां त्रयाणां
नाथो बलिर्विगतवैभववित्तराज्यः।
जातो, गतश्च खरभानुसुधांशुशून्यं
नक्तंदिवं परिवृतं तमसाहिलोकम्† ॥ १७ ॥

सत्स्वेषु सत्त्वरहितेष्वपि का कथा वा
विष्णुः स्वयं हरविरिञ्चिसमर्चिताङ्घ्रिः।
उद्दीपयन् मम रुषं नु बभूव कीट-
चक्रं चकर्त्त च गिरौ चनिरूप्यमाणः‡ ॥ १८ ॥

लक्ष्मीस्तदा कमकरादुपकारमस्य
भर्त्तुस्तया गतवती विषमा विपत्तिम्।
यस्तु न याशकटहाः उपकर्त्तुमप्य
सा किं करोतु भवती वद रे वराकी ॥ १९ ॥

विश्वात्मका हरिरयं, ननु तत्समत्वं
कोटाणुता त्रिजगतः प्रभुता च तुल्या।
चक्रस्य कर्त्तनमयो जगतः स्थितिर्वा
तत्प्रीतये भवति नात्र विकल्प§ ईदृक् ॥ २०

किन्त्वेष तादृगगति यदवाप विष्णुः
तन्मानवर्द्धनमवेहि नु तदिदानीम्।

---

* रावणस्य अशोकवनमिति। † अहर्निशम्—दिवारात्रम्।
‡ चक्रकम्—चक्रदानम्। § सन्देह।

एवं यदि, त्रिभुवनेश्वरमानितं त्वं
केनेरितः कथय मां क्षतवान् विमान्यम्? २१ ।

तत् श्रूयतां यदचिरेण करिष्यते ते
क्रुद्धेन सूर्य्यतनयेन विमानितेन ।
यस्या बलात् बहुतृणं* ननु मन्यसे मां
सङ्गं तया विघटयामि हि चिन्तया ते ॥ २२ ।

विच्छेदमाशु विरचय्य परानुरक्तां
कुर्य्याश्च तां, यदि न कर्त्तुमल भवेयम् ।
ज्योतिर्विदो न गणयन्त्वपशक्तिकं माम्
अन्यं ग्रहम्, ग्रहगणेषु वदन्तु नीचम् ॥ २३ ।

छाया प्रसूः प्रसवकष्टकरं परं मां
सम्भावयत्वविरताश्रुमुखी, पिता मे ।
पुत्राय मुञ्चतु पिता सुहृयालुतां, यत्
ईदृक्क्रियः शनिरिति त्यजतु स्वधाम्† ॥ २४ ।

इत्यमातर्जयन् सौरि-
र्निर्दहन्निव मां दृशा ।
अन्तर्दधे, सान्त्वनार्थं
निद्रयानुपदं गतः ॥ ३५ ।

इत्युक्ता नृपतिर्मोहा-
वेशसंमोलितेक्षणः ।

---

* ईषदूनं तृणमसि बहुतृणं, तृणवदपकृष्टमित्यर्थः ।

† पिता पुत्राय सुहृयालुतां मुञ्चतु, यत् यस्मात् शनिः ईदृक्क्रियः इति मत्वा मे पिता सूर्य्यः स्वधाम त्यजतु इत्यन्वयः ।

आभुग्नकण्ठनालश्च
पतन्नेव तया धृतः ॥ २६ ।
सा चैनमवदत् स्वैर-
मंसस्थापितकन्धरम् ।
परामृशन्ती हस्तेन
मृदुना मञ्जुभाषिणी ॥ २७ ।

कार्य्येण विजृम्भयितुं
शक्तिमशक्तो गिरा प्रकटयति यत् ।
तत् जल्पतु शनिरनिशम्
चिन्तार्थं चिन्तयालं ते ॥ २८ ।
तव चिन्ता खलु तादृक्
योपैति गणय नृपवर ! न कदाचित् ।
अनुरागो ननु यस्याः
स्थिरतामेति न जलौकोवत् ॥ २९ ।
घासात् अन्यं घासं
स द्रवाश्रयति पुरुपान्तरं स सदा ।
आश्रयमेति कदाचित्
निपतति श्व निराश्रयो वासौ ॥ ३० ।
सुरभी च यथा व्रतति-
स्तरुमेकं धृतवती प्रशाखाभिः ।
आकर्षति सम्मुखतः
तरुमथ गुल्ममपरं सहसा ॥ ३१ ।

नैताहक् तव चिन्ता,
  नैषा वा धावतीचणाकृष्टा,
पुरुषान्तरमाकष्टुं
  न कदा गणयति निजां शक्तिम् ॥ ३२ ।
चित्तं मदीयमेतत्
  नूनं लौहमयधरणिधरवर्य्यः ।
आकृष्टये तदस्या-
  यस्कान्तो*मणिरणुर्नालम् ॥ ३३ ।

रविसूनोः प्रातिकूल्यात्
  राक्षसीभिः प्रपीड़िता ।
कामं निकामदुःखार्त्ता
  बभूव जनकात्मजा ॥ ३४ ।
किन्तु तस्याः किमकरोत्
  शनिकोटी लसत्त्विषः ।
सतीत्वनाम्नो रत्नस्य
  जानक्या मनुजेश्वर ! ३५ ।
त्रिलोक्या आधिपत्यस्य
  निष्पयेण दशाननः ।
प्रविचालयितुं शेके
  किं नु तस्याः स्थिरं मनः ? ३६ ।
दमयन्त्याः किमकरोत्
  प्रतिकूलः कलिश्च वा

---

* अयस्कान्त मणि — लौहाकर्षकप्रस्तरविशेष ।

वर्ण्यते चरितं तस्याः
श्रवणाञ्जलिना पिब ॥ ३७ ॥
प्रियया सह भ्रमत एव कानने
निषधाधिपस्य फलमूलसश्नत: ।
द्वाधिका दशाल्पगुरवः समाः क्रमात्
समयः* समागमदसौ च दुष्करः ॥ ३८ ॥
अनया विमोहनशरीरशोभया
सह वत्सरं जनगणैरलक्षितः ।
अतिवाहये कथमिति चिन्तोश्वरो
विकलेन्द्रियः समजनि क्षणं तदा ॥ ३९ ॥
विपिने प्रिया त्यजत एव मे शुभम्
कथमन्यथा समयपालनं भवेत् ।
इति चिन्तयन् नरपतिर्विचुक्षुभे
शतकोटिभिर्हतशिरा इव क्षणम् ॥ ४० ॥

अथैकदा सा विनिवेश्य मस्तकं
प्रियस्य वाहौ स्वपिति स्म सस्तुते ।
चिरेण लब्धावसरः चिन्तोश्वरः
स तां विहातुं चकमे तथाविधाम् ॥ ४१ ॥
स वाहुमाकृष्य शनैः शिरोधरां
निधाय भूमौ उदतिष्ठदाकुलः ।
पदानि धीरः कतिचित् दधत् ततः
न्यवर्त्तत द्राक् विपदं विचिन्तयन् ॥ ४२ ॥

---

* अज्ञातवासकाल ।

न वेत्ति चान्यां नृपतिस्तया विना
कथं नु तां मोक्ष्यति भीषणे वने ।
उदयुनैचो विकलेन्द्रियः पुनः
प्रियेकपार्श्वे समुपाविशत् शनैः ॥ ४३ ।

कलास्पदं श्यामिकया ततस्तु तत्
कलङ्करेखाङ्कितचन्द्रसुन्दरम्
परिस्फुरद्बिम्बनिभाधरं चलन्-
मधुव्रतव्रातसमाकुलालकम् ;
क्षणं विकुञ्चच्चतुरभ्रु साध्वसात्
क्षणं स्मितस्नातरदच्छद मुदा
प्रतिक्षणं वर्द्धितदर्शनस्पृहं
ददर्श कान्तावदनं स नैषधः * ॥ ४४, ४५ ।

न मां वने मुञ्च नृशंसजन्तुभिः
समाकुले नाथ ! निराश्रयामिमाम् ।
इतीरितं द्राक् प्रियया वचस्तया
निशम्य राज्ञो हृदयेन कम्पितम् ॥ ४६ ।

समुल्लासे च समीक्ष्य वल्लभां
पुरेव सुप्तामपबोधलक्षणाम् ।

* ततः स नैषधः नल श्यामिकया कलास्पदम् अतएव कलङ्करेखाङ्कितचन्द्रसुन्दरं परिस्फुरद्बिम्बनिभाधरं चलन्मधुव्रतव्रातसमाकुलालकं मधुव्रतव्रातेन भ्रमरसमूहेन समाः तुल्याः आकुलाश्च अलकाश्चूर्णकुन्तला यस्मिन् तत् तथोक्तं क्षणं साध्वसात् विकुञ्चच्चतुरभ्रु भयेन क्षणं विकुञ्चन्त्यौ चतुरे भ्रुवौ यस्मिन्, तादृशं क्षणं मुदा स्मितस्नातरदच्छदं प्रतिक्षणं वर्द्धितदर्शनस्पृहं क्षणे क्षणे वर्द्धितः दर्शनस्य स्पृहा येन तादृशं तत् कान्तावदनं दमयन्तीमुखं ददर्श ।

अथायमाहूय दिगीश्वरान् सुरान्
समीरणं भूधरमेवमादिशत्॥ ४७।

अयं नृशंसोऽशरणां पतिव्रताम्
इमां वने मुञ्चति कार्य्यगौरवात्।
भवद्भिरार्य्यैः परिरक्ष्यतामियं
विपन्नरक्षा हि सतां कुलव्रतम्॥ ४८।

इतीरयित्वा नृपतौ विहाय तां
गते गलद्धैर्य्यमुदश्रुलोचने।
वनाधिदेवी चकिता स्खलद्गतिः
समेत्य हस्तेन तदङ्गमस्पृशत्॥ ४९।

व्यपेतनिद्रा परितो नलप्रिया
प्रियं दिदृक्षुः प्रजिघाय चक्षुषी।
अपूर्णकामापि तथाविधा क्षणं
निनाय नात्यन्तनिराशमानसा॥ ५०।

मनश्चलं, भूनिहितं स्वकं शिरो
गतस्य पत्युश्च चिरायमाणता।
समुत्सुकं तत्पथदत्तचक्षुषे
शशंसुरस्यै सकलं स्फुटाक्षरम्॥ ५१।

ततः समुत्थायससम्भ्रमं सती
विकीर्णकेशा च विशृङ्खलाम्बरा।
त्रसत्कुरङ्गीव वनेऽभितस्ततो
विचेतुमीशं विकला प्रचक्रमे॥ ५२।

गुहासु कुञ्जेषु सरित्तटेषु च
प्रियं प्रनष्टं रुदती विचिन्वती ।
यदा क्वचित् तं न ददर्श विह्वला
तदापतत् भूमितले नृपात्मजा ॥ ५३ ।

अयत्नलब्धप्रतिबोधसुस्थिता
पुरो ययौ सा स्थिरलक्ष्यलोचना ।
निशम्य किञ्चिच्चकिता परागता
पुनर्व्यचेष्टीत् खलु तेषु तेषु च ॥ ५४ ।

अशब्दनिक्षेपपदं परागतः
प्रसार्य्य हस्तौ स्फुटपङ्कजोपमौ ।
पिधेहि नेत्रे मम पृष्ठतः स्थितः
समेहि नाथेति जगाद कातरा ॥ ५५ ।

अथो भुजङ्गो यमवाङ्भीमः
कालिप्रयुक्तो विवृतास्य एक ।
अदुद्रुवत् हा भयकातराक्षीम्
मुक्तार्त्तनादां नृपनन्दिनीं ताम् ॥ ५६ ।

व्याधोऽन्वसा तत्र समेत्य कश्चित्
भुजङ्गम तं निजघान घोरम् ।
रक्षस्तु तस्मात् यदसौ विधातुम्
इयेष तत् सर्पशतं न कुर्यात् ॥ ५७ ।

न तं यदा वारयितुं
क्षमा साभूत् दमस्वसा ।

तदा सतीत्वरक्षार्थं
सती तुष्टाव कातरा ॥ ५८

मातर्मातरयं व्याधो
मुष्णरक्ता करोति माम् ।
एहि त्राणाय पुत्रास्ते
रक्ष मा दक्षनन्दिनि* ॥ ५९ ।

अरण्ये शरण्ये ! विपन्नां विहस्ता-
मनाथा निषादो बलाद्देति मातः ।
त्वदन्या न काचित् परित्रातुमीशा
गतिस्त्वं गतिस्त्वं गतिं देहि दुर्गे ॥ ६० ।

अरण्ये विघोरे विपज्जालमग्ना-
मपर्णे ! त्रिनेत्रे ! त्रिलोकेशि ! रक्ष ।
महार्घं सतीत्वं हरत्येष मूढो
गतिस्त्वं गतिस्त्वं गतिं देहि दुर्गे ॥ ६१ ।

सहसा नयनात गिरीन्द्रपुत्र्याः
निरगात् ज्योतिरलं जगत् प्रदग्धुम् ।
विदधे विलसत्तडिल्लताभं
किरणैस्तच्च वन पिशङ्गवर्णम् ॥ ६२ ।

प्रविशत् नयन नृपात्मजाया.
विवरैर्सङ्घिरदो† व्यलोकि तेजः ।
युगपत् विदहत् किरातदेह
घनमारोधमिवातितीव्रवेगम् ॥ ६३ ।

* दक्षनन्दिनीम् ।          † विवरसङ्घि—नमस्करे ।

कर्पूरराशाविव तत्र पापे
दग्धे किराते मनुजेशपत्न्याः ।
गात्रे प्रतस्थे सुरपुष्पवृष्टिः
विलोलरोलम्बकुला* पपात ॥ ६४ ।

तच्चिन्तयालमवधूय मनोरुजं तां
लक्ष्म्या वचश्च तदनुस्मर नाथ सर्व्वम् ।
नारायणः कमलया सह मां यदाह
स्वप्ने समाहितमतिः शृणु तत् वदामि ॥ ६५ ।

सन्तापिताय रविरश्मिभिरेव कामं
छाया जनाय नितरां स्वदते सुशीता ।
प्रह्लादनश्च तिमिरौघनिरुद्धदृष्टेः
दीपोहि, सौख्यपरिवृढय एव दुःखम्† ॥ ६६ ।

इत्यालोच्य मया चित्ते !
जम्मतः सुखिनौ युवाम् ।
अनुभावयितुं दुःखं
सुगृहीतः‡ शनैश्चरः ॥ ६७ ।
प्रेषयामि वियामायाः
रमया सह माधवः ।

---

* विलोलं चपलं रोलम्बकुलं भ्रमरसमूहो यस्याम् सा ।

† रविरश्मिभिः कामं सन्तापिताय जनाय सुशीता छाया नितरां स्वदते प्रीयते एव, दीपो हि तिमिरौघनिरुद्धदृष्टेः प्रह्लादनश्च, दुःखं सौख्यपरिवृढये एव भवति, दुःखानुभवः सुखानुभवं वर्द्धयतीति तात्पर्य्यम् ।

‡ सुगृहीतः—निपुणः ।

एवमाख्याय चाश्वास्य
पश्यन्त्या मे तिरोदधे ॥ ६८ ।
तदेहि मात्स्यिका एते
मत्स्यानाददते सुखम् ।
भिक्षित्वा कियतो मत्स्यान्
कुर्म्मोऽथ देहधारणम् ॥ ६९ ।

इति श्रीश्रीवत्सचरिते महाकाव्ये ग्रनिनिर्भर्त्सनो
नाम नवमः सर्गः ।

---

# दशमः सर्गः ।

शकुलमेकमवाप्य* नृपस्ततः
प्रियतमामवदत् मुदितः परम् ।
झषमिमं † दह, भक्षणतोऽस्य मे
विरमतु क्षुधया परिबाधनम् ॥ १ ॥

गुरुमुखात् श्रुतवान् शनिवासरे
ऽनलविदग्धमिमं झषमश्नतः ।
प्रशममेति तदुत्थितपीड़नं
तदनलं ज्वलय त्वरितं प्रिये ॥ २ ॥

नृपसुता नृपतेरनुशासनात्
शकुलमत्स्यमसौ व्यदहत् मुदा ।
कथमिवोपनये झषमीदृशं
नृपतये बत भस्मसमाहृतम् ॥ ३ ॥

इति विचिन्त्य ययौ नृपभामिनी
सरसि कर्त्तुमनाथ झषोन्मृजाम् ।
सहि च तत्करतः पुनरुच्छ्वसन्
जलमगात्, अहसत् शनिरम्बरे ॥ ४ ॥

तया हसन्तं शनिमम्बरे स्थितं
विदग्ध चिन्तानलगर्भया दृशा ।

---

* शकुल—शोलमाछ इति भाषा । † झषम्—मत्स्यम् ।

लगाद किमेवमसाधु चेष्टितं
विकल्पसे यदधिकृत्य निर्घृण। * ॥५।
शने! समाहूय नृपो विचक्षणो
विमानितं त्वामकरोत् किमात्मना?
यदस्त्वधैर्य्यो ननु वैरमोचनं
चिकीर्षुरेन तुदसि प्रतिक्षणम्? † ६।
विचित्रमेतत् दिनभर्त्तुरौरसो
भवादृशोऽभूत् तनयो हि, यः शने!
निरागसं दु खयते' प्रपीडयन्
न लज्जते प्रत्युत तेन हृष्यति ॥ ७।
पापग्रहे त्वयि शने! परिकोपितेऽसौ
जानाति मत्पतिरनिष्टफलं प्रकामम्।
धर्मं तथापि न जहौ परिवर्द्धयस्तु
लक्ष्म्या समस्तजगता परिपूजितायाः ॥ ८।
पत्युस्तथाविधविचित्रविचारशक्ति'
तादृक् स्वधर्म्मपरता बुधमोहिनी च।
पापग्रह पवनवत् सुदुर्ग्रह त्वा
क्रोधाभिभूतमकरोत्,नैच तोषित? धिक् ॥‡॥९।

---

* चिन्ता [illegible] इवा [illegible] स्थित तथा [illegible] शनि विदग्ध ! विघृंण! असाधु चेष्टितम् अधिकृत्य किं वद विकल्पसे एव लगाद।

† हे शने। विचक्षण नृप आत्मना स्वय त्वां समाहूय किं विमानितम् अकरोत् यत् यस्मात् अस्तधैर्य्य एव वैरमोचन चिकीर्षु प्रतिक्षण एनं तुदसि पीडयसि।

‡ पत्यु महत् बुधमोहिनी तथाविधविचारशक्ति तादृक् स्वधर्म्मपरता

धत्ते पतिमेम हि येषु न वस्तुबुद्धिं
संसारभावनिवहेषु विनश्वरेषु।
किञ्चित् चकर्थ कदनं* ननु तेषु तेषु
तेनैव जाल्म! तव गर्व्वपटलमोटक्? १०।

दग्धः शने! शकुल एष पुन. श्वसन् यत्
मायाबलेन सलिलं प्रविवेश, तेन।
कार्य्येण ते क्षतमहीपक्षतिर्भवामि
पापं समाचरत एव, नमामि तत् त्वाम्† ॥११।

योऽयं करः प्रतिदिनं सुरभक्ष्यभक्ष्यं
यस्मै पुरा स्वयमदात् कथमेष तस्मै।
दग्धं झषं ननु ददात्विति चिन्तया यत्
दुःखं बभूव हृदयच्छिददो निवृत्तम् ॥ १२।

तत् तुभ्यं नम इत्युक्त्वा
हसन्ती पत्युरन्तिकाम्।
जगाम सा राजपुत्री
सर्व्वं चास्मै न्यवेदयत् ॥ १३।

तस्यास्तत गर्व्वितं वाक्यं
श्रुत्वा शनिरधोमुख.।

---

पवनवत् सुदुर्ग्रह पापपङ्क त्वां मायाभिभूतम् अकरोत्। जीवित शेष? न जीवित मकरोत्। धिक्।

* कदनम् उपद्रवम्।

† पापं अनिष्टं समाचरत एव अनिष्टाचरणे प्रवृत्तस्यैव ते तव तेन कार्य्येण क्षतमहीप्रकृतिः भवामि, तत त्वां नमामि।

सतीत्वतेजसा दग्धो
  म्लानच्छायस्तिरोभवत् ॥ १४ ।

चिन्तावाक्यमुपश्रुत्य
  नृपश्चिन्ताकुलोपि सन् ।
चिन्ताधिवारणायैव
  निराकुल इवाभवत् ॥ १५ ।

कन्दमूलं समाहृत्य
  चोपयुज्य तया सह ।
विशश्राम क्षणं राजा
  ततश्चिन्तामवोचत ॥ १६ ।

"मादृशां नयनकोणगोचरः
  सागरोपि मरुभूमिसोदरः ।
आश्रयामि यदि कल्पपादपं
  सोपि याति सहसावकेशिताम्" ॥ १७ ।

अन्नपूर्णा त्रिजगती
  यदान्नं माययाहरत् ।
अलक्ष्मिचो भगवान्
  तदेत्थं प्रियमब्रवीत् ॥ १८ ।

पश्य कान्ते वनमिदम्
  एकेन शनिमायया ।
फलत्वभ्याहारसहो
  दिनेनाजायत प्रिये ॥ १९ ।

कान्ते मुखे नीरजाक्षि !
क्वचिदेतावतापि ते।
अणुमात्र विषादस्य
कथ लक्ष्म न लक्ष्यते ॥ २० ।

एवमुक्ता तु सा चिन्ता
विहस्य पतिमब्रवीत् ।
नास्ति मे विभव: किञ्चित्
विना ते पादपङ्कजम् ;
अविद्यत तत् पुरतो
नित्य नाथ ! विराजते ।
तन्मे कथं विषादः स्यात्
नंष्टेष्टो हि विषीदति ॥ २१ ।

राज्यादिकं बहु धनं
तव नष्ट महीपते !
तेन त्वमीदृशावस्थो
जातोसि ननु वल्लभ ॥ २२ ।

एवमुक्तो महाराजः
सोन्माद इव चाब्रवीत् ।
कान्ते कान्ते भवत्येव
मेवमुक्तं स्फुटाक्षरम् ॥ २३ ।

मम हि त्वन्मुखाम्भोजात्
अधिकास्था धनादिषु ।

कष्टमेवं वाध्यमानं
त्वद्वचो वाधतेतराम् ॥ २५ ।

एवं नृपवचः श्रुत्वा
चिन्ता त प्रत्यवोधयत्,
सम्मुख तव सर्व्वस्व
त्वतपदञ्च तथा मम,
यद्येव तर्हि का चिन्ता
शनिना नो हृत नु किम् ?
वर्त्तावहै सम्मुखीमौ
यदावा नाथ मङ्गतौ ॥ २५ ।

एतत् स्थान परित्यज्य
गमिष्याव. परेद्यवि ।
पश्य गौरिपिता सूर्य्यो
यात्यस्त सङ्गते. करै ॥ २६ ।

स्वजनितेषु हि पतत्सु सपतन् .
चरमाद्रे शिरमेव विघ्नतः
घतमहनदस्त्रधारया
परिनिमग्नतनो विलीयते ॥ २७ ।

प्रकृतिः कृपया समागता
रुधिरस्त्रावनिरोधवाञ्छया ।
जमदग्ध्यलनीनवासमा
हतमङ्गे निदधाति त द्रुतम् ॥ २८ ।

तदुपान्तगलद्गभस्तिभिः *
द्रुतचामीकरभास्वरैः † क्षणम् ।
अनुरञ्जितवीचिविस्फुर-
च्चपलेव प्रिय ! सिन्धुरीक्ष्यते ॥ २८ ।

असितारुणमम्बरञ्च तत्
दिवि कीदृक् ननु पश्य शोभते
क्षणमम्बुनिधेर्जलं यथा
हरकण्ठद्युतिजित् सविद्रुमम् ; ‡
स्फुटकोकनदाकुला क्षणं
शितिसैवालततिर्यथा जले ;
परिपूर्ण इव क्षणं जवा-
गिरिकर्णीकुसुमैः करण्डकः § ;
हरितैररुणैः फलैः क्षणं
निचितः प्लक्ष इव ; क्षणं विलात्

---

* तस्य तपनस्य उपान्तेभ्यः गलन्तः गभस्तय किरणास्तैः ।

† द्रुतो गलित यश्चामीकरं सुवर्णं तद्वत् भास्वरैः ।

‡ असितारुणं तत् अम्बरं वस्त्रम् आकाशञ्च हरकण्ठद्युतिजित् यदा तु क्षणं सविद्रुमम् विद्रुमलतारञ्जितम् अम्बुनिधेः समुद्रस्य जलं यथा तद्वदिव दिवि कीदृक् शोभते पश्य ।

§ क्षणं स्फुटकोकनदाकुला रक्तोत्पलमालापरिव्याप्ता सती शितिशैवाल राजिर्यथा शितिशैवालराजिरिव जले शोभते। जवागिरिकर्णीकुसुमैः जवा-कुसुमैः अपराजिताकुसुमैश्च पूर्णः व्याप्त करण्डकः पुष्पभाजनमिव शोभते।

स्फुरदुग्रशिखेव धूमिते-
　ष्टकराजिर्ज्वलदग्निका निशि * ;
क्षणमेणदृशां घनद्युति:
　कवरीभस्य इवातिरम्यया
अरुणै: कपिशैश्च पाटलै:
　कुसुमैर्गुम्फितया स्रजान्वित: † ;
घनभावमुपेयुषा क्वचित्
　परिशुष्केण नितान्तधूमला
वहता तरलेन च क्वचित्
　रुधिरेणामलनिपुणशोणरुक् ;
धवला क्वचिदिन्दुरोचिषा
　हरिता शाद्वलविनिन्दिना क्वचित्
अरुणा च नवार्कशोचिषा
　पलितेन ध्वजचित्रवाससा ;
रणभूमिरिव क्षणं ‡ ; तृणै:
　निचितप्रान्तमिवातिचिक्कणै:

---

* क्षण इरिते अरुणे क्षणे सितिमे श्यामे. अत एव नटस्य इव, वर्षविलासात् गह्वरात् स्फुरदुग्रशिखा निशि ज्वलदग्निका धूमितेष्टकराजिरिव शोभते ।

† क्षणम् घनश्यामं अरुणै: कपिशै: पाटलैश्च कुसुमै: गुम्फितया ग्रथितया अतिरम्यया स्रजा मालया अन्वित: एणदृशां कामिनीनां कवरीभस्य इव शोभते ।

‡ क्वचित् घनभावम् उपेयुषा परिशुष्केण रुधिरेण नितान्तधूमला, क्वचित् वहता तरलेन रुधिरेण अमलनिपुणशोणरुक् नवांशुकसमच्छाया, क्वचित् इन्दुरोचिषा धवला, क्वचित् शाद्वलविनिन्दिना हरिता, क्वचित् नवार्कशोचिषा पलितेन ध्वजचित्र वाससा अरुणा च रणभूमिरिव क्षणं शोभते ।

अरुणं क्षणमुग्रवायुना
   शतशो भिन्ननिपातितं गृहम्* ॥ ३० ॥
प्रकृतिश्चलपल्लवाञ्चला
   प्रियमित्रव्यसनेन दुःखिता ।
उपवीजयितुं शनैरिव
   स्वयमेवारभते तदोद्यमम्† ॥ ३१ ॥
मरुता परिचालिते ततो
   मृदुना प्रावरणेऽपसर्पति ।
अतिरक्तवपुः पुनारविः
   सहसायाति विलोकनीयताम् ॥ ३२ ॥
घनमूर्द्धकरः स्खलद्गति-
   र्निखिलं विश्वमिवाभिमन्त्रयन् ।
अभिधातुमिति स्फुटाक्षरं
   दिनकृत् प्रक्रमतेऽस्तमाविशन् ॥३३॥
"ननु यस्य जगत्त्रयार्चिते
   जननं निर्मलनिर्जरान्वये
वत पारिषदाय यस्य मे
   गुरुशुक्रबुधादयो ग्रहाः ;
निखिलं ग्रहचक्रमोजसा
   लघयन्, ऋक्षगणं तिरोदधत्

---

* भरितिकले हके निपतितानां भरुणम् उग्रवायुना शतशः भिन्ननिपातितं भग्न गृहमिव शोभते ।

† ईदृश तत् मिथ्म् ।

प्रणुदन् जगतस्तमस्ततं
 विदधत् वीतशुचश्च पद्मिनीम्;
समवृत्तितया प्रजामनो
 रमयन् तुल्यमनन्यशासनः
अशिषं कमलोदयं दिशन्
 जगदेकातपवारणं चिरम्;
उदयानुगुणोपगूहनां*
 प्रथमां† क्षणतः एव संत्यज्यन्।
श्रितवारुणदिक्‡ निरायति-
 ननु सोऽहं वत याम्यधोगतिम्;
बहिरौचितरागवञ्चितं
 ननु पश्चात्तवसं विवास्य माम्।
द्विजराजमियं नवोदयं
 भजते पापमतिर्मदान्वितम्॥" २४।
सहसास्तमयोन्मुखः प्रिया-
 वदनासक्तमवद्यलोचनम्।
स नृपेन्द्रविलोकनं रविः
 समकुचत् दृढ़रश्मिसंयतम्॥
तमवेक्ष्य तदा तथाविधं
 स्मृतलोकस्थितिरेप विव्यथे

---

* उदये वृद्धौ अनुगुणम् अनुकूलम् उपगूहनम् आलिङ्गनम् यस्यास्ताम्।

† प्रथमां—पूर्वां दिशम्।

‡ श्रिता वारुणी दिक् पश्चिमाशा येन तादृशः सन्।

निराचक्रे, जाने सुरनरगणः कर्म्मवशगः
सुखं वा दुःखं वानुभवति न तत्रास्ति विमतिः ॥३९॥

इत्युक्त्वा कान्तया सार्द्धं
पर्णशालां न्यविक्षत।
दीर्घायमानयामां ता
त्रियामामत्यवाहयत् ॥ ४० ।

इति श्रीश्रीवत्सचरिते महाकाव्ये शकुलमत्स्याप-
हरणो नाम दशमः सर्गः।

## एकादशः सर्गः ।

---

अथ प्रभाते नगराभियायिणा
पथा प्रतस्थे सह चिन्तया तया ।
नृपः समुत्तीर्य्य वनानि पर्व्वतान्
दिनावसाने नगरं समासदत् ॥ १ ॥

दक्षिणेन नगरं शुचिक्रियाः
काष्ठविक्रयपवित्रवर्त्तनाः ।
ऐकमत्यमवलम्ब्य सौख्यतः
काष्ठिकाः प्रतिवसन्ति केचन ॥ २ ॥

इति प्रहृष्टः श्रुतवान् जनव्रजात्
प्रिये ! सुखं नौ वसतां तैः सह ।
इति ब्रुवाणो नृपतिस्ततः परं ,
जगाम तेषां वसतिं मनोरमाम् ॥ ३ ॥

तौ विलोक्य पदचारिणौ पुरो
दम्पती रुचिरदर्शनौ ततः ।
काष्ठिकाः स्तिमितचक्षुषः परां
कौटिमापुरतुलस्य नन्दयोः ॥ ४ ॥

किं पुलोमतनयासमन्वितो
वासवोऽयमसुरैरुपद्रुतः ।

स्वां पुरीं प्रविहरन्नलचितो
वस्तुमिति विजनेऽस्मदालये ॥ ५ ।
किं स्मरः स्मरहराच्च* साध्वसात्
लब्धमूर्त्तिरनुकम्पया विधेः ।
एति वस्तुमपविघ्नमात्मनो
भार्य्ययात्र विजनेऽस्मदालये ॥ ६ ।
किं विधुन्तुदभयात् विधुः स्वयं
रोहिणीपरिगतस्त्यजन् दिवम् ।
निर्जनेत्र वसतेर्च्चिकीर्षया
प्रैति वा नियतपूर्णमण्डलः ॥ ७ ।
काष्ठिकैः प्रणतिनम्रशिरोभिः
प्रीतिवाप्यसलिलाञ्चितगण्डैः ।
कण्टकाञ्चिततनूभिरमायैः
स्तूयते स्म नृपतिः सह्दारः ॥ ८ ।
सञ्चितं गुरु तपः सवितारं
लोकयद्भिरनमेष चक्षुर्भिः ।
शुष्ककायलतिकैर्नु निदाघे
नाम्मदादिभिरहो जगदीश ॥ ९ ।
वात्याहतैर्विस्मयगात्रवन्धैः
वन्यानलोत्तापनिकामतप्तैः ।
तडित्क्षतानोकविदूननैर्वै
न वा क्षताम्माभिरहो तपस्या ॥ १० ।

* स्मरहरः शम्भुस्तस्मात् इति तदर्थः ।

न पीवराचौ विगलद्विमायाम्
आकण्ठमग्नैः सलिले च शीते।
उद्वेजिताङ्गैरवशेन्द्रियैर्वा
तेपे तपोऽस्माभिरसाध्यमीश ॥ ११ ।

तथापि नाथ! स्वयमन्वयानया
समन्वितो नः पतितोसि दृक्पथे।
प्रसीद देव प्रतिबोधयात्मनः
स्वरूपमज्ञानसुबोधमीश्वर ॥ १२ ।

किं ललाटनयनं तिरोदधत्
छद्मना धृतमनुष्यविग्रहः।
यासराञ्छलयितुं जनानिमान्
कान्तया कपटवेशयागतः ॥ १३ ।

प्रत्युवाच नृपतिः समाहृतः
काष्ठिकान् ब्रुवत एव तादृशम्।
मानवोस्मि, भवता महात्मनाम्
आश्रयाय शरणागतः स्त्रिया॥ १४ ।

इत्येव वादिनस्तस्य
वाक्यमाचिप्य काष्ठिकाः
ऋजुमेंव महाभाग!
वक्तुमर्हसि किङ्करान् ॥ १५ ।

कायेन मनसा वाचा
भवन्त सह भार्य्यया

सपत्नीकं गुरुमिव
पूजयामो यथामति ॥ १६ ।
अद्यारभ्य महाभाग !
शरीरं जीवनञ्च नः ।
त्वदधीनं विजानीहि
प्रोक्तेन बहुना च किम् ॥ १७।
उपदेशैश्च कार्य्यैश्च
देवीयं करुणापरा ।
यथाजातांश्च नो दारान्
शिक्षां लम्भयतु ध्रुवाम् ॥ १८ ।
मनुष्यपदवीं येन
स्पृशामो वयमञ्जसा ।
गुरो ! त्वया तथा कार्य्यम्
इत्येतत् प्रार्थयामहे ॥ १९ ।
आप्यायितोऽस्मि भवतां
वचसामृतवर्षिणा ।
वृत्तिमाश्रित्य युष्माकं
करिष्ये देहधारणम् ॥ २० ।
एवं वादिनि श्रीवत्से
कालिका हृष्टचेतसः
तथेत्युक्त्वा नृपस्यास्य
संविधां चक्रुराहृताः ॥ २१ ।

प्रत्यहं काननं गत्वा
तैः सार्द्धं नृपतिस्ततः ।
अल्पभारं महामूल्यं
चन्दनेन्धनमाहरत् ॥ ३२ ।

तद्विक्रयेण नृपतिः
वणिग्भ्यः प्रतिवासरम् ।
लेभे बहु धनं, तेन
खाद्यद्रव्यं समाहरत् ॥ ३३ ।

चिन्तया संस्कृतं भक्ष्यं
देवभोग्यं नृपस्ततः ।
सापत्यांस्तान् सपत्नीकान्
समादरादभोजयत् ॥ ३४ ।

अनास्वादितपूर्व्वं तत्
भक्ष्यं पेयञ्च काष्ठिकाः ।
भुक्त्वा पीत्वा च सर्व्वे तां
मेनिरे छलमानवीम् ॥ ३५ ।

तैः सार्द्धं वसतस्तस्य
सस्त्रीकस्य महोचितः ।
सप्तधा सप्त भिन्नानि
दिवसान्यतिचक्रमुः ॥ ३६ ।

गृहकर्म्मणि किंकर्य्यः
प्रियप्रियाः कलाविधौ ।

तेषां स्टहिण्यश्चिन्तायाः
　वयस्याः संकथासु च ॥ २७ ।
योगक्षेमकरे भूपे
　दिनैः कतिपयैस्ततः ।
काष्ठिका वीतदारिद्र्याः
　तुच्छवृत्तिं जहुः क्रमात् ॥ २८ ।
सन्दीपिते ज्ञानदीपे
　तिमिरे मोहनामनि ।
निरस्ते, ते महाप्राज्ञाः
　जाता गौरवभाजनम् ॥ २९ ।
देशोन्नतिसमाधायां
　नियुञ्जाना महत् धनम् ।
भूस्वामिना च सञ्जाताः
　प्रतिक्षणमवेक्षिताः ॥ ३० ।
व्यसने कृतसाहाय्या
　निवार्य्य चार्थकृच्छ्रताम्* ।
प्रतिवेशिजनानां ते
　ऽप्रियश्रावुकतामगुः ॥ ३१ ।
तदवस्थांय तान् सर्व्वान्
　पश्यतो नृपतेस्तनूः
अप्राकृतापि हर्षाय
　मूर्च्छतेऽलं बभूव न ॥ ३२ ।

* अर्थाभावनिबन्धनं कष्टम् ।

प्रजापालनसम्भूत-
सौख्यस्य नृपतिः क्षणम् ।
स्मर्तुं नावसरं लेभे
प्रशासत् कालिकानिमान् ॥ ३३ ।

असौ सौख्याय दिव्याय
नासूयति शनिः कथम् ।
इत्यसौ नृपशार्दूलः
सा च चिन्ता विसिस्मिये ॥ ३४ ।

कदाचित् रम्यतीराया-
स्तटिन्या वीर्थसि स्थितम् ।
चिन्ता समेत्य साविवशा
प्रणनाम नरेश्वरम् ॥ ३५ ।

केयं नमति मां चिन्ते !
किमर्थमिह चागता ?
पृष्टैवं सा वक्तुमित्थ-
मारेभे नृपगेहिणी ॥ ३६ ।

इयं सा पद्मनाभस्य
वत्सस्य गृहिणी शुभा ।
सतास्मि यद्गुणैर्नाथ !
मन्दोत्कण्ठा ननान्दरि ॥ ३७ ।

नीचवंशप्रसूतेति
नास्याः कार्या विमानना ।

पङ्कजापि गुणैराढ्या
  पद्मिनी कस्य न प्रिया ॥ ३८ ।
अस्याः सुनिष्पन्नमपि ग्रहाणां
  वैगुण्यतोऽयं ननु दोष एकः ।
अदूदुषत् जीवितमिन्दुशुभ्रं
  गोमूत्रबिन्दुः पयसामिवौघम् ॥ ३९ ।
वन्ध्यत्वरूपेण भुजङ्गमेन
  वल्ला इव श्रोद्गमसम्भ्रयाः ।
अस्या गुणौघैरपि भूषितायाः
  सुरम्यदृश्यत्वमकारि भीमम् ॥ ४० ।
श्वश्रूः पुनर्दारपरिग्रहाय
  पुत्रं नियुङ्क्ते ननु नप्तृकामा ।
किन्त्वेष वत्सः सुदृढानुरागो
  न तन्मते तिष्ठति धर्म्मबुद्धिः ॥ ४१ ।
सुतोऽनया * मे प्रतिषिध्यमानः
  पत्न्यन्तरं नेच्छति सग्रहीतुम् ।
इति स्थिरीकृत्य च पश्यतीमां
  श्वश्रूः सदा रोषकषायनेत्रा ॥ ४२ ।
त्वयानुरुद्धः स च पद्मनाभः
  आदास्यते नाथ कलत्रमन्यत् ।

---

* अनया साध्व्या प्रतिषिध्यमानः मम सुतः पद्मनाभः पत्न्यन्तरं संग्रहीतुं न इच्छति इति हेतोः, श्वश्रूः पद्मनाभस्य माता इमां सदा रोषकषायनेत्रा सती पश्यति।

इत्याशयैषा शरणं प्रपन्ना
यत् सांप्रतं संप्रति तत् विधेहि ॥ ४३ ।

इत्येवमुक्तो नृपतिः सरोष-
श्चिन्तामवादीत् स्फुरिताधरोष्ठः ।
किं विस्मृतं ते यदहं द्विषामि
बहुं विवाहं वत वह्निधर्मम् ॥ ४४ ।

अधमो महीरुहचयेष्वयं तरु-
र्बहुभिर्लताभिरुपगूढविग्रहः ।
बहुवल्लभत्वमचलेष्वपि प्रिये,
न सहे, कथं तनयतामुपेयुषि ॥ ४५ ।

दयिते ! प्रसूनरुचिराश्च मालतीं
वहता व्यपितकुसुमां परां समं ।
समरागता यदपि दर्शितेऽसुना
तरुणा, तथापि किमयं स्तुतेः पदम् ?॥ ४६ ।

प्रियस्य यासां व्यसने विपत् समा
समोचिता तास्वपि वृत्तिरस्य च ।
रवौ समप्रेम्णि विपत्तिमागते
तमोनिमग्ना हि दिशैव पद्मिनी ॥ ४७ ।

न पद्मनाभः समवृत्तितां व्रजन्
इमां प्रवीणां न च तां नवा समं ।
क्षमिष्यते तोषयितुं ततः क्रमात्
सुखं निरुद्धप्रसरं भविष्यति ॥ ४८ ।

न चित्रमेतत् यदि सा नवोढा
मायापरा तन्नयनं रुणद्धि।
अविद्ययाधिष्ठितचित्तवृत्तेः
विभोरपि ज्ञाननिधेर्विकारः * ॥ ४९ ॥

तस्याः समासाद्य शरीरसङ्गं
चिन्तामणिस्तादृश एव कान्तः
विहाय नैसर्गिकभावमग्र्यम्
अलाततामेष्यति नात्र शङ्का ॥ ५० ॥

अवयसि बत पुत्रे सञ्जयन्ती नवोनां
जनिमियमतिमूढा पद्मनाभप्रसूतिः।
लगयति विषभीमा वल्गुगत्या भुजङ्गीं
तदनुसरत यूयं मामिमां† वारयामि ॥ ५१ ॥

इति श्रीश्रीवत्सचरिते महाकाव्ये काष्ठिकालयाभिगमनो नाम एकादशः सर्गः।

---

* यदा ज्ञाननिधि विभुरपि अविद्यया (मायया) विकृतचित्त भवति, तदा अज्ञानान्धः स पद्मनाभ, तया नवोढया व्यामोहितचेता यदि सविकारोऽभि जानाति किं चित्रम्।

† इमां पद्मनाभजननीम् वारयामि, यूयमपि मामनुसरत मम साहाय्य कुरुत।

## द्वादशः सर्गः ।

गच्छन् कदाचित् शनिमायया द्राक्

कश्चित् वणिक् सैकतरुद्धनौकः ।

उद्धारणेऽस्याः विफलप्रयासो

विषादसिन्धौ सगणो न्यमाङ्क्षीत् ॥ १ ।

दैवज्ञवेशेन तिरोहितात्मा

शनैश्चरस्तत्तरणीमुपेतः ।

उवाच साधो ! ग्रहकोपतस्ते

दुरुत्तरापत् समुपस्थितेयम् ॥ २ ।

पूर्वं प्रयाणात् भवता न शान्ति-

र्नवग्रहाणां विहिता नचार्चा ।

विधीयतां सा प्रथमं यथावत्

पश्चात् तरेरुद्धरणं सुसाध्यम् ॥ ३ ।

अनुष्ठिते तद्वचनात् यथावत्

यागे ग्रहाणां परिपूजने च ।

भक्त्या विनम्रं विहिताञ्जलिं तं

कार्त्तान्तिकोऽसौ समुपादिदेश ॥ ४ ।

साध्वी सदाचाररता वराङ्गी

काचित् शुभा काष्ठिकयासभूमौ

वसत्यसौ चेत् स्पृशति प्रसन्ना

तरिस्ततः प्राप्स्यति वायुवेगम् ॥ ५ ।

तद्वल्लभो याति वनं प्रभाते
काष्ठाय यामात् परमेति गेहम्।
गन्तव्यमस्मात् सविधे त्वयास्याः
परं परेद्युर्द्युमणेः प्रकाशात्॥ ६।

तस्याः प्रसादेन विना तवेयं
तरिर्विपन्ना ध्रुवमित्यवेहि।
सर्व्वप्रयत्नेन ततस्त्वयासौ
प्रसादनीया ननु सार्थवाह॥ ७।

स्त्रिया हि चित्तं नवनीतकोमलं
परोपतापेन भवेत् द्रुतं द्रुतम्।
ततस्त्वयेदं व्यसनं सुदुस्तरं
निवेद्यमस्यै रुदता भृशं वणिक्॥ ८।

या तत्र पत्नी गतभूषणत्वात्
शोच्या विपन्ना ननु पद्मिनीव।
विमुक्तवातेरितकेशजाला
धूमावलीच्छन्नशिखेव वह्नेः;
म्लानच्छविः क्षीणतनुः प्रकामं
भौमोपरक्ता ननु रोहिणीव।
तरुत्वचा संवृतगात्रयष्टिः
सदैव नासाग्रनिविष्टदृष्टिः;
दृष्टा त्वया स्पन्दविहीननेत्रं
तां विद्धि नौकोद्धरणे निदानम्।

प्रयाहि साधो कुरु तत्प्रसाद-
मुक्तैवमादित्यसुतस्तिरोभूत् ॥ ९ ।

स्नानद्युतौ व्योमतलात् निपत्या-
परं पयोधिं विशतीन्दुबिम्बे ।
पत्युर्वियोगादिव शोकमग्ने
तारागणे नश्यति नष्टभासि ;
पूर्व्वाद्रिमारुह्य च सानुरागे
करैः समुत्क्षिप्य तमोवितानम् ।
क्रमेण संभिन्नदलां हसन्तीं
सरोजिनीं पश्यति पद्मिनीशे ;
महीरुहाणां शिखरेषु बाला-
तपेन रक्तेषु दवाग्निबुद्ध्या ।
भियेव सर्व्वेषु विहङ्गमेषु
जहत्सु नीड़ान् कृतघोरनादम् ;
स सार्थवाहः कृतनित्यकर्म्मा
स्नातः पवित्रो गललग्नवासाः ।
उपानहौ मुक्तपदो विनीत-
श्चिन्तान्तिकं प्रापदमौलिमूर्द्धा ॥ १० ।

तां प्रत्यभिज्ञाय विलक्षणैस्तैः
चिह्नैः क्षितौ पातितजानुहस्तः ।
ननाम भक्त्या गलदश्रुनेत्रो
नुनाव बद्धाञ्जलिरेवमेनाम् ॥ ११।

तरी मेऽन्तरीपे निमग्नाचलास्ते
तदुद्धारणं त्वत्पदस्पर्शतः स्यात् ।
न चान्या गतिर्मे विजानीहि मातः
सति ! त्वां नमामीश्वरि ! त्वं शरण्या ॥१२॥

श्रुतं मे पुरा त्वं पितुर्यज्ञभूमौ
निशम्य प्रमूढात् ततो भर्तृनिन्दाम् ।
अहासीः शरीरं समाधिप्रभावात्
सति ! त्वां नमामीश्वरि ! त्वं शरण्या ॥१३॥

यतस्तं गतासुं वने सत्यवन्तं
पुनर्जीवितं त्वं स्वशक्त्या चकर्थ ।
न चित्रं यदि त्वत्पदस्पर्शनान्मे
तरी स्यात् समुत्तारिता दक्षपुत्रि ॥ १४ ।

।ना त्वा जगद्धाद्दसम्भाव्यशक्तेः
क्षमानो: परित्रातुमीशाभवत् का ।
रोचाप्रदाने प्रवृत्ताश्च सीता
तरी मे विपन्ना तदागच्छ मातः ॥१५।

नं तां भ्रमन्तीं विमुक्ताञ्च पत्या
यदासौ किरातोऽवदद्दुष्टवाक्यम् ।
।दा त निहन्तुं त्वदन्या च का स्यात्
समर्था, यदि त्वं दयार्द्रा न वा स्याः ॥१६।

।हं वणिक् दक्षसुता सती सा
किमर्थमेव वद जल्पसि त्वम् ।

त्वां प्रत्यभिज्ञातवती मुने ! त्वं
मां विप्रलब्धुं समुपस्थितोसि ॥ १७ ।

निशम्य चिन्तावचनं स साधुः
दीनाननस्तन्मुखसक्तदृष्टिः ।
उदश्रुरेवं विहिताञ्जलिस्तां
जगाद रोषेण कषायनेत्राम् ॥ १८ ।

मातः परोक्षं नहि तेऽस्ति किञ्चित्
सम्भाव्य किं तत् रविजं ग्रहं माम् ।
दंष्ट्रस्यकाण्डे वद नेत्रनिर्यत्-
क्रोधाग्निना निष्करुणा दयार्हम् ॥ १९ ।

नौकानिरोधात् पुलिने तटिन्याः
दुःखेन कालं नयतः कियन्ति ।
दिनान्यतीतानि समात्र मातः
शोच्यां दशां प्राप्नुवतो जनानाम् ॥ २० ।

अकालपाताच्चमसस्तसंख्यकं
क्रमेण सीदत् विजहत् महार्घताम् ।
निक्रन्तति द्रव्यमतीव सुन्दरं
विलोक्यमानं मम जीवितं सति ॥ २१ ।

व्यपेतकाला कतिचित् पदार्थाः
निर्मूल्यतां यान्ति च निर्व्यपेक्षाः ।
न वेद्मि कः कर्मविपाक एवं
प्राणिषु विशेषु च मां हिनस्ति ॥ २२ ।

अन्त्यलोकेषु च पृच्छ्यमानो
य: कश्चिदागत्य वदिष्यति त्वाम् ।
यदेष साधु: सगणोऽतिमात्र
कष्ट प्रपन्न: खलु सीदतीति ॥ २३ ।

ज्योतिर्विदामग्रसरश्च कश्चित्
उपादिशत् मा गणयन् कदाचित् ।
अस्यात्र पल्ल्या किल गूढरूपा
काचित् सती, ता शरण भजस्व ॥ २४ ।

तस्या पदस्पर्शनमात्रतस्ते
विपद्विमुक्ता भविता तरीयम ।
तत् स्वार्थवाह ! व्रज तत्सकाश
तया विनान्या न गतिस्त्ववेति ॥ २५ ।

त्वा प्रत्यभिज्ञाय विलक्षणैस्ते-
स्तैर्लक्षणैस्तद्गणकोपदिष्टै: ।
प्राप्तोऽस्मि मातश्चरणार्पणेन
तरीं समुत्तारय तारिणि त्व ॥ २६ ।

किंवा भय देवि ! शतेश्वरात् ते
बिभेति सिंहो हरिणात् किमेतत् ।
प्रकृष्टमैश्वर्यमहो भवत्या:
सर्वामरेभ्य: ग्नित: कथा का ॥ २७ ।

खद्योतक: स्वेन तिरोविधत्ता
धाम्ना च तारामुडुरिन्दु क्रान्तिम् ।

इन्दुश्च सौरीं, न कदाचिदेषं
सौरिः सतोभावरितुं क्षमः स्यात् ॥ २८ ।
तदेहि मातः करुणापरा त्वम्
यदा स्पृशन्ती तरणीं निरुद्धाम् ।
विचालय द्राक् तव कीर्त्तिरेषा
प्रद्योतयत्वम्ब ! जगत् चिराय ॥ २९ ।
इत्येवमुक्ता गलदश्रुनेत्रे
चिन्तापदं चुम्बति सार्थवाहे ।
सा पद्मनाभस्य च धर्म्मपत्नी
प्रचक्रमे भाषितुमादृता ताम् ॥ ३० ।
सन्दृश्यते या त्वयि भक्तिमत्ता
सा देवयोनिष्वपि दुर्लभा हि ।
तत् सा कथञ्चिदपि मानुषेषु
न सम्भवेत् प्रागिति निश्चयोऽभूत् ॥ ३१ ।
केनापि कार्य्येण निगूढ़रूपा
पत्या तथा च्छद्मनरेण सार्द्धं ।
अवातरत् कापि भुवं सुरेशी
न मानुषीयं नै च मानुषोऽसौ ॥ ३२ ।
आकारगुप्तावपि यत्नतो वां
गतिः स्थितिर्योक्तिरमानुषो सा ।
स्फुटाचरं प्राह निजस्वरूपम् ।
दृष्टा समुद्रेत्तुमलं रहस्यं
(रहस्यमुद्भेत्तुमलं हि चेष्टा) ॥ ३३ ।

अथ वणिक् प्राह यथा तथैव तत्
न सम्प्रयोऽस्मिन विपर्येऽणुमात्रक ।
न बुध्यते तत प्रकृत प्रयोजन
प्रणोदिता येन दशामिमा गता ॥ ३४ ।
न तेन बुद्धेन च न प्रयोजन
महत् पुरास्माभिरनुष्ठित तप ।
तदेव चैव भवती सभर्तृका
चकार न प्रापयितु कृतार्थताम् ॥ ३५ ।
श्रुत भवत्या मुखपङ्कजान्मया
यथा हरि सौरिनिपीडित स्वयम्।
शिला चकर्त्ताश्रितकोटविग्रहो
धृतकविणि विदधच्चिर रमाम ॥ ३६ ।
हरापि गौर्या सह सौरिपीडनात्
कुवेरशैल विजहन्नगेश्वरम ।
दधत् वपुर्मानुपमस्मादालये
निकृष्टकर्मा चपयत्यनहसम् ॥ ३७ ।
न चैप सौरिस्थलसार्थवाह
समागतस्त्वा सखि विप्रलब्धुम् ।
यस्माद्भयादेवमनुप्रपन्ना
शोच्या दशा विश्वविमोहिनी त्वम् ॥ ३८ ।
स एवमेव कृपण प्ररोदिति
चितौ लुठत्याकुलमानसो मुहु

* लभित कर्षपदमूलम्।

विचुम्बति त्वच्चरणं नताननो
    मनो न विश्वासमुपैति मामकम् ॥ ३९ ।
व्रजामि नित्यं सलिलाय निम्नगां
    तरिञ्च पश्याम्यचलां कियच्चिरम् ।
पिता * न यावत् विनिवर्त्तते वनात्
    विधेहि तावत् वणिजो हितं द्रुतम् ॥ ४० ।
प्रबोधितैवं नृपधर्म्मपत्नी
    चचाल हृष्टं वणिजं समन्वक् ।
कौतूहलात् काष्ठिकयोपितस्ता-
    मनुव्रजन्ति स्म विवृद्धहर्षाः ॥ ४१ ।
आसाद्य चिन्ता तटिनीं तटस्था
    व्यलोकयत् तां † तरणीं निरुद्धाम् ।
आरोहयंस्तां विनयाच्च नम्राः
    तां ‡ नैगमा नार्दमनल्पहर्षाः ॥ ४२ ।
तत्पादसंसर्गत एव नौका
    गतिं प्रपेदे प्रतिरोधमुक्ता ।
साधो ! तरेर्मामवरोहयाद्य
    भर्त्तान्यथोद्वेगमुपैत्यपश्यन् ॥ ४३ ।
भक्त्या ततस्तां परिपूज्य साधुः
    यावत् तदाग्रामातिपालनौत्री ।
प्रवर्त्तते तावदुपेत्य सौरि-
    र्दैवज्ञवेषो वणिजं न्यपिधोत् ॥ ४४ ।

---

* क्षेत्रम    † पाठ—निरुद्धाम् नौकाम् ।    ‡ पाठ—स्मराः ।

मा तावदेवं कुरु सार्थवाह !
पुनस्तरण्यां प्रतिरुद्धगत्याम्।
सुदुर्लभेयं भविता, तदानीं
का ते गति: ? याहि सहैनया तत्। ४५।

प्राग्ज्योतिषराजस्य महामहिम्न:
श्रीवत्सनाम्नो नृपतेरियं सा।
अनर्णवोत्था कमलापरेव
चिन्तेति पत्नी महनीयकीर्त्ति: ॥ ४६।

प्रनष्टराज्येन शनै: प्रकोपात्
पत्या सहैव वनमाजगाम।
सतीत्वसम्भूतमहःप्रभावात्*
एनं परित्रातुमना विपन्नम् ॥ ४७।

उद्भ्रान्तचित्ता पतिदेवतेति
न मन्यते सौरिमिव तृणाय।
परानुरक्तास्तु विधातुमेनां
सर्व्वात्मना तत् यतते स सौरि: ॥ ४८।

प्रत्यक्षदृश्यं ननु रूपमस्या:
ईदृक्तया जात्वपि सावधारि।
राहुग्रस्तेव शशाङ्कमूर्त्ति:
सातिदृश्योयं शनिमिषदृष्टेव ॥ ४९।

यदस्ति रूपं निहतावशिष्टं
तदेव साधो ! स्फुटमाह तुभ्यम्।

* सतीत्वेन प्रभावेण।

यदेवमेवं भुवनत्रयेऽपि
न दृश्यसि त्वं नच पश्यसीति ॥ ५० ।

समागरा तस्य धरा करार्पिता
यः कर्त्तुमेनां वशवर्त्तिनीमलम् ।
श्रयं गुणोऽस्या ननु सर्व्वयोषितां
विलक्षणः केन नवेयमिष्यते ॥ ५१ ।

सम्पूर्णतां तेन शनैः प्रतिज्ञा
गमिष्यतीत्यत्र न कापि शङ्का ।
इति ब्रुवन्तं तमुवाच चिन्ता
विकम्पितभ्रूकुटिलानना सा ॥ ५२ ।

किमात्थ ? धिक् ते गणनां रे मूढ़ !
पूर्णप्रतिज्ञो भविता स सौरिः ?
कथं नु ते मूर्द्धनि तीव्रवेगम्
अद्यापि वज्रं पतितं न पाप ॥ ५३ ।

अन्यादृशस्ते मयि दृष्टिपातः
मन्ये स एवासि शनैश्चरस्त्वम् ।
मा प्रद्रव प्रद्रव तिष्ठ तिष्ठ
कथं विलीनोऽसि-भयात् नमस्तः* ॥ ५४ ।

सा विस्मितान् प्राह च नैगमांस्तान्
दुराकनाहं कथिताम्मि केति ।
तदाद्य गोकां स्थगितां कुरुध्वम्
उत्कण्ठिताहं पतिदर्शनस्य ॥ ५५ ।

---

* नमस —पाठान्तरं, नमस्तात् ।

इत्यादिमन्त्रीं स वणिक् विनीतः
तां प्रत्यवादीत् धृततत्पदाब्जः।
अवेहि मातस्तव वासभूमिः
इतः प्रदेशात् दश योजनानि ॥ ५६ ।

स्पृष्टा तरिस्त्वच्चरणारविन्दैः
प्रयाति वायोरतिशय्य वेगम्।
तद्धैर्य्यमास्थाय कियन्ति मात
र्दिनानि तिष्ठात्र, कृतं भयेन ॥ ५७ ।

यस्या भयात् सौरिरसौ विहस्तः
प्रालोयत क्वापि च पश्यतां नः।
तस्यास्तवाख्यात् शनिता भियालं
द्रक्ष्यन्ति सर्व्वे भवतीं सतीं ताम् ॥ ५८ ।

व्यामोहितस्तै रविसूनुवाक्यैः
समुत्सहेत प्रबलप्रलोभः
स्प्रष्टुं त्वदङ्गं यदि कश्चिदस्य
गतिर्दवाग्नौ पततो ध्रुवैव ॥ ५९ ।

श्रीवत्सराजः सुप्रतीतनामा
ससागराया धरणेरधीशः।
भवत्पतिः, मत्पतिरम्ब ! तस्मै
करं प्रतापेन जितो ददाति ॥ ६० ।

त्वं देवि ! साक्षात् ननु दक्षपुत्री
देहं पुनर्भीतिक्रमादधाना।

अस्मद्विधानां करुणार्द्रचेताः
  विपद्विनाशाय धरां पुनासि ॥ ६१ ।
यस्मै तरिर्लब्धगतिः प्रयाति
  विजित्य सूर्य्याश्वगणं जवेन ।
स त्वत्पदाम्भोजरजःप्रसादः
  तत् किं न येनासि समार्च्चनीया ॥ ६२ ।
कियत्सु गच्छत्सु दिनेषु मातः
  कार्य्यं समाधाय निवर्त्तमानः ।
नेष्यामि निर्विघ्नमलब्धकष्टां
  पत्युः सकाशं भवतीं स्थिरेधि * ॥ ६३ ।
चिन्ता तदैवं वणिजानुनीता
  प्रत्युत्तरं न प्रतिपद्यते स्म ।
बद्धाञ्जलिर्मुद्रितनेत्रयुग्मा
  तस्थौ च सूर्य्याभिमुखी स्थिराङ्गी ॥ ६४ ।
भगवन् जगतस्तमो हरन्
  उदयाद्रेश्चरमाचलं व्रजन् ।
वितरन् निखिलाय देहिने
  ननु चैतन्यमतन्वते धियम् ॥ ३५ ।
स्वसुतस्य कथं शनेरिमां
  धियमुच्छेदयरां परात्पर ।
न निवर्त्तयसि प्रमाद्यती
  निजकार्य्यात् तव तात ! निन्द्यता ॥ ६६ ।

---

* स्थिरा स्वस्थचित्ता एधि भव ( लट्‌लोट्‌ हि ) ।

अथवा छलनापरेण मां
विपदं दोषमृते सुतेन ते।
परिलम्भयता वतीदृशीम्
पितरालोकय नृत्यते * मुदा ॥ ६७।

जनकाय निवेद्यते कृतं
तनयेनाहितकर्म्म भास्कर!
शनिनाशनिनेव यत्कृतं
कदनं तत् तव कथ्यते मया ॥ ६८।

अथवा शनिशासनं पितः
तव दुःसाध्यमिदं नु तिष्ठतु।
हर मे हर रूपमीदृशं
विकृतां मां कुरु ह्यार्थ्यदर्शनाम् ॥ ६९।

इत्युक्त्वां वरमीदृशं चितिभुजः पत्न्यां जगत् तत्क्षणं
छन्नं घोरतमश्छटाभिरखिलं रुद्धावलोकं क्षणम्।
निर्य्याते तिमिरे क्षणेन नयने प्रोन्मीलयंस्तां पुरो-
ऽदृष्ट्वा विस्मयमागतस्तत इतोऽन्विष्यन् वणिक् दृष्टवान् ॥
पर्य्यङ्के शयितां विसृष्टवपुषं कंकालशेषां जरा-
जीर्णां निश्वसतीं बलीमुखमुखीं केशालकैर्वर्जिताम्।
दुर्गन्धां किल शिंचिणीं परिहृतां भोमैर्भुजङ्गैस्तया
दुर्दर्शां दहता च देहमहसा पोतैकदेशे स्थिताम् ॥७०।

इति श्रीश्रीवत्सचरिते महाकाव्ये चिन्तावियोगो नाम
द्वादशः सर्गः।

---

* नृत् + भावे लट्।

# त्रयोदशः सर्गः ।

---

आवर्त्तमानाय वनात् नृपाय
सव्येतराक्ष्णा स्फुरतातिमात्रम् ।
आवेदि सर्व्वं तदमग्ङ्ग घोरं
निशम्यते तेन पुरा गृहे यत् ॥ १ ।
सव्येतरत् चक्षुरिदं मदीयं
स्फुरत् स्फुटं वक्ति किमप्यनिष्टम् ।
न केवलं नामत एव धत्ते
वामत्वमेतदनु चार्थतोपि ॥ २ ।
राज्यं समुच्छेदमियाय सर्व्वं
नीराजधानिर्वनमाश्रितोस्मि ।
शरीरमायस्य करोमि वृत्तिम्
अज्ञातवासश्च चिरं वसामि ॥ ३ ।
यन्मद्यमेवं रविसूनुरेषः
द्रुह्यत्यजस्रं नहि तेन दूये ।
एकाहि चिन्ता तमसां प्रमाथे
सदातनी भास्कररश्मिमाला ॥ ४ ।
सा चेत् तदा किं परिचारिकाभिः
वाणी तदीया यदि किं सुधाभिः
पोतेन किंवा यदि बुद्धिरस्या
विपत्पयोधेस्तरणे सुखेन ॥ ५ ।

अनेन तां तां विषमां प्रतिज्ञां
मुहुर्मुहुर्मां स्फुरदेतदक्षि।
प्रतिक्षणं स्मारयति प्रकम्प-
श्चित्तस्य वक्तीव तदिष्टसिद्धिम् * ॥ ६।

उत्कम्पते पादयुगं पुरस्तात्
यातुं, समासन्नतरे निकेते।
सोदन्वतः किं सुतरां मदङ्ग'
किमद्य चित्तं व्यथतेतरां वा ॥ ७।

चिन्तेतरत् वस्तु न किञ्चिदस्ति
मत्स्वामिकं, तत् तदशर्मणो † वा।
किमन्यदद्य स्फुरणेन वामं
ससूचयेत् चक्षुरहो हतोऽस्मि ॥ ८।

नायाति यावत् तदनिष्टवार्त्ता
स्फुटाक्षरा दुःश्रवणा श्रुतिं मे।
गच्छामि तावत् विषयान्तरं द्राक्
श्रेयस्तथा कुर्व्वत एव मन्ये ॥ ९।

तथाकृते त्वश्रुततद्विपत्तेः
मृत्युः सुखो मे श्वसनं हि तावत्।
सन्देहदोलाचलचित्तवृत्तेः
अमृत्यु कष्टं मरणाधिकं यत् ॥ १०।

---

* मुहुर्मुहुः स्फुरत् एतत् वामम् आद्य चक्षुः मां अनेन तां तां विषमां प्रतिज्ञां प्रतिक्षणं स्मारयति, चित्तस्य प्रकम्पः तदिष्टसिद्धिं, तस्य मने इष्टसिद्धि तां चिन्तायाः परस्तात्समस्यपेटकाभं वक्तीव।

† तस्य चिन्ताविषयस्य वस्तुनः अशुभ आगतः स्यात्।

निरस्य शङ्का सकृदेव दुःखं
  सम्पद्यते वरं तत् तदनिष्टजन्म।
आजीवनान्तं तदनिर्णये तु
  वैकल्यमीदृक् न पुनः सहिष्ये ॥ ११ ॥

चिन्तार्थमेवं परिचिन्तयन्त-
  मुपागमत् तं सहि पद्मनाभः।
यत्नेन संस्तम्भितशोकचिह्नः
  प्रोवाच चैनं स्वमुखार्पिताक्षम् ॥ १२ ॥

आवर्त्तनात् काननतोऽद्य तात!
  वेला व्यतीतेति वयं प्रकामम्।
उद्विग्नचित्ता अतिपातयामः
  कालं भवद्वर्त्मनि दत्तनेत्राः ॥ १३ ॥

"कीदृग्दशा मे वनिता वराकी
  तूर्णं समाख्याय निरस्य* चिन्ताम्"।
इत्येवमुक्तो व्यथितोऽपि गाढ़ं
  स कान्तिकः सुस्थवदाबभाषे ॥ १४ ॥

माता त्वया तात! विनाकृता सा
  यत् कष्टमायाति कथं मया तत्।
आवेद्यते ते, वचसाभिधातुं
  सुदुष्करं तत्, तदलं नु पृष्ट्वा ॥ १५ ॥

इत्येवमुक्तो नृपतिः प्रहृष्ट-
  स्तमब्रवीत् वत्स! लघु प्रयाहि।

---
* निरस्य—निराकुरु (नि.+अस्+लोट् हि)।

तद्दर्शनाय त्वरते मदीयं
   चित्तं, किमेवं वद मन्यरोषि ॥ १६ ।

स्पन्देन वामस्य विलोचनस्य
   चिन्तागता याजनि दुष्टचिन्ता ।

मनःशरीराश्रयमथ यच्च
   वैकल्यमासीत् नितरां गरीयः ;

चिन्ता मदर्थं भ्रममुत्सुकेति
   त्वदाननात् शुश्रुवुषो * मम द्राक्

दूरं गता साच गतं विदूरं
   तच्च क्षणात् पूर्ववदस्मि सुस्थः ॥ १७ ।

सम्बन्ध एतादृश एव नूनम्
   मन्योन्ययोश्चित्तशरीरयोर्यत् ।

एकस्य दुःखानुभवेऽपरस्य
   दुःखानुभूतिर्नियतेत्यवेहि ॥ १८ ।

देहेन सा चेत् भ्रियते तदा किं
   त्वामेवमेवं विकलं, कथं वा ।

अनुद्रुतौ मे परिक्षीणमेवं
   पश्यामि, खिन्नोसि, किमातपेन ॥ १९ ।

क्रमेण मध्य रविरम्बरस्या-
   रूढः प्रचण्डातपतामुपेतः ।

तीव्रं ललाटन्तपमग्निगर्भं
   मयूखजालं विसृजत्यजस्रम् ॥ २० ।

---

* शुश्रुवुषः—श्रुतवतः (श्रु+क्वसु, षष्ठ्येकवचनम्)।

तद्वत्स ! शीतां वटपादपस्य
छायामुपेहि श्रमनोदनाय ।
चिन्ता मदर्थं भृशमुत्सुकेति
तद्दर्शनाय त्वरते मनो मे ॥ २१ ।
जानासि बाला मयि जातभक्ति-
र्यपीते न भुङ्क्ते नच पोयते * सा ।
स्थाप्या सुखं साद्य मयातिदु:खं
प्रतीयुषा हा गमिता चिराय ॥ २२ ।
इति ब्रुवाण: परमाद्य यत्नात्
अनुद्रुतस्तेन स भूमिपाल: ।
आवासमागात् विगतेपि काले
प्रत्युद्गमार्थं न च सा समेता ॥ २३ ।
किमेतदित्याकुलधी: समन्तात्
दिदृत्तया प्रेरितनेत्रयुग्म: ।
ददर्श काञ्चित् स्रवदश्रुधारां
धराशयां निश्वसतीं विशालम् ॥ २४ ।
विमुक्तकेशीं स्फुरदोष्ठबिम्बां
ध्यानेन निस्पन्ददृशं निषण्णाम् ।
वामे करे स्थापितवामगण्डां
शोकेन मूकामपरामपश्यत् ॥ २५ ।
प्रमुक्तकण्ठं रुदतोच काञ्चित्
शुश्राव सञ्जातगुरुप्रकम्प: ।

* दिवादिगणीय पी + लट, ते ।

आहत्य वक्षः परिपीड़यन्ती
भुश्चिन्दतीं कां स्वकचानदर्शत् ॥ २६ ।

प्रियाहितं मामुपसृत्य कापि
न वक्ति किञ्चित् त्वथवा चिमुक्तया ।
यत् वक्ष्यते तत् स्फुटमाभिरुक्तम्
अवस्थया शोकजयैदृशीव ॥ २७ ।

नूनं प्रिया नास्ति वतान्यथा चेत्
कालो महान् मे गृहमागतस्य ।
सन्तप्यमानस्य च दृष्टिमार्गे
चिरायते * सा पतितुं कथं वा ॥ २८ ।

गच्छतोऽद्य सदनात् वनाय मे
शङ्कया कथितमस्य चेतसः ।
यत् परापतत एष्यति प्रिये
त्वन्मुखं न मम दृश्यतां पुनः ॥ २९ ।

किं प्रत्ययात् तेषु हरिप्रियायाः
न वेद्मि वाक्येषु तथाविधेषु ।
नैतत् मनो मे त्वदनिष्टपात
प्रत्येति यत्र स्फुटति प्रिये द्राक् ॥ ३० ।
पतिव्रतेयं ग्रनिपीड़नात् त्वां
रचिष्यति चौणिभृतां वरेण्य ।

---

* चिरायते—विलम्बते ।

सदोगतं मामिति सिन्धुपुत्री
   स्मरस्यदो वक्ष्यति सान्त्वनाय * ॥ २१ ॥

क्व सा गता श्रीमुखनिःसृता वाक्
   सुधेव साभूत् मम भाग्यदोषात् ।
ग्रासाय सौरी विहतानने त्वं
   जहास्यकाण्डे कथमन्यथा माम् ॥ २२ ।

एतत् प्रकृतोऽप्यथवा स सौरिः
   किं कर्तुमीशो मरणात् परं सः ।
त्वया विना मे हतजीवितस्य
   सन्धारणं निष्फलमद्य जातम् ॥ २३ ।

अये महत् काठिकहन्टमेतत्
   घोत्कारभित्वाम्बरमेति दूरात् ।
स्फुटीकृतेयं भविता नु वार्त्ता
   कर्त्तुं तया यामहमस्मि भीतः ॥ २४ ।

त्र्योमेन्द्रिय ! त्वं विकलं भवाद्य
   चैतन्य ! तात ! त्यज मां चिराय ।
प्रियाहितं ग्राययितुं समेति
   शोकाकुलः काठिकसंघ एषः ॥ २५ ।

---

* हे [illegible] ! तात ! [illegible] विना [illegible] मां [illegible] सिन्धुपुत्री [illegible] सदोगतं मां [illegible] [illegible] [illegible]-[illegible] ।

महापकारं ननु कुर्व्वतोपि
भर्त्तोरनिष्टाचरणे महात्मा।
न जात्वनुज्ञास्यति तात एषः
तस्मात् तदर्थं समयो न नेयः ॥ ३६ ।
अद्यापि कार्य्यानुमतेः प्रतीक्षा
मातुर्हृतायाः सुमहान् हि कालः।
यावत् न निर्व्विसमतिर्व्विजह्यात्
सा जीवितं तावदिमे व्रजाम ॥ ३७ ।
तान् नैगमान् अद्य समूलघातं
प्रपिष्नतां नोऽद्य गुरुर्न तातः।
एते वयं नापि च तद्विधेयाः
तदेत यामोद्धरणाय मातुः * ॥ ३८ ।
त्व तात! तावत् वनिताद्वितीयः
त्यक्तान्यकार्य्यः सुसमाहितात्मा।
प्रत्यन्तरीभावमुपेत्य तातं
सेवस्व यत्नात् ननु पद्मनाभ! ॥ ३९ ।
प्रयत्नसंस्तम्भितवाष्पपातं
महाधिदूनं विकलेन्द्रियञ्च।
नेशा वयं द्रष्टुमिमं न चास्मै
मुखानि संदर्शयितुं क्षणेऽस्मिन् ॥ ४० ।
तं तावत् वणिगधमं निपातयद्भि-
स्तां प्रत्याहृतिमुदितां पुरो निधाय।

* तत् तस्मात् एत आगच्छत मातुः उद्धरणाय याम। यामेति प्रार्थनायां लोट्।

आर्यस्य स्रुतगिरिगिराशुधौतमेतत्

द्रष्टव्यं सुखनलिनं प्रहर्षरम्यम् ॥ ४१ ॥

स्तुत्यैषां वचनमिदं सुधायमानं

सुस्पष्टं मनसि नृपश्चकार हृष्टः ।

इन्तेतेऽपरमिव संलपन्ति चिन्ता-

संक्रान्तं, तदिह हि संगता न शङ्का ॥ ४२ ।

अय हृदय सुधीरं नव्यवार्त्तं त्वमेभि-

र्वचनमधुभिरेषां संशयस्ते विलुप्तः ।

यमसि विधुरमेवं शङ्कसेऽपारसिन्धुं

सच समजनि पुण्यैः पादलग्ना हि कुल्या ॥४३।

इत्येवं मनसि विधाय हृष्टचित्तः

श्रीवत्सो द्रुतमगमत् स काशिकौघम् ।

आमूलात् श्रुतनिखिलप्रवृत्तिरेभ्यः

स्वस्थोऽभूदकृत च तांस्तथोपदेशैः ॥ ४४ ।

स्वार्थानुकूलं परपीड़नं चेत्

स्वार्थानुसन्धानपराः कथञ्चित् ।

न तद्विधानात् विरमन्ति तातः

विज्ञाय चेतत् प्रकृतिं नभेध्वम् ॥ ४५ ।

नाथः पुनारोधमसौ हि साधुः

विगर्ह्यमाणो व्यसृजत् न कान्ताम् ।

तस्मात्र वत्सा न यथार्थ एषः

नियम्यतां क्रोधरिपुं शपथ ॥ ४६ ।

वणिक् स कान्तां जननीमिव स्वां
समर्चयन् रक्षति यत्नतस्ताम्।
यूयं यदि क्रोधबलात्कृतास्तं
निहत्य तामानयत प्रसह्य॥
काष्ठोपजीवीति पतिं विहाया-
यकान्तवल्यच च सार्थवाहे।
निबद्धभावेयमिति प्रवादो
जनास्यचारो न चरिष्यति द्राक्॥ ४७, ४८।

नास्यास्तथाभूतमवर्णमीशः
सोढुं भविष्यामि तदत्र सर्वे।
तिष्ठन्तु धीराः प्रतिरुद्धकोपाः
प्रत्यागमं मे प्रतिपालयन्तः॥ ४७।

कान्ता समुत्थाय पतन् द्राक्
आयुष्मतो वः परिरभ्य गाढम्।
स्पर्शोऽचिरात् सान्द्रतमं समुद्यद्-
रोमाञ्चराजिर्मुदितः प्रमोदम्॥ ४८।

पुत्रानेवं गुरुभरयुचो विस्मृतस्नानपानान्
दीनान् दूनान् नयनसलिलक्षालितार्द्राननाथ।
निर्भिन्नाभ्रान् मुखरितदिशो घोरचीत्कारशब्दैः
दृष्ट्वार्ता व्यथितहृदयोऽधोमुखः खं जहाति॥४९।

पुत्रा देहस्थितिविहितये यात, किञ्चिन्मदर्थं
भक्ष्यं पेयं समुपनयत स्वल्पयत्नेन लभ्यम्।

निश्चिन्ताय स्वपित भवतां शल्यमुद्धर्त्तुकामः
प्रस्थास्येऽहं रजनिविगमे प्रीतिपूर्व्वं पुरं तत् ॥ ५० ॥

इति श्रीश्रीवत्सचरिते महाकाव्ये चिन्तोद्धरणो-
द्योगो नाम त्रयोदशः सर्गः ।

---

# चतुर्दशः सर्गः ।

क्रोधजाभिभवरोधनाक्षमो
जायते मम घृणास्पदं शनिः !
कोऽत्र वा भवति भक्तिभाजनं
यो रिपून् न नयते * शरीरजान् ॥ १ ।
आवहन्नपि तथाविधं शनिः
श्लाघ्यमेव बहुमन्यते मया ।
यदसौ प्रतिददाति मेऽधुना
कोटवेधरहित ललाम तत् † ॥ २ ।
सर्वशक्तिपरिभावि सतोत्वं
वेद्मि नेति नच किन्तु शनेस्तत्
शाठ्यमद्भुतमपह्नुत्य कार्य्ये
चिन्तयन्नधिगतोस्मि हि भीतिम् ॥ ३ ।
शक्यते नहि शनेर्निपीड़नं
सोढुमब्धिसुतया, क्रमेण मः ।
सह्यमेवमनिपिडवृत्ति तत्
दुह्यति प्रतिपदं यथेच्छया ॥ ४ ।
इत्थमस्तमितधैर्य्यमवार्य्यं
शौरिकार्य्यमवधार्य्य विपन्नः ।
भूप एष सहसा वनमाला-
च्छन्नतीरमगमत् लवणाब्धिम् ॥ ५ ।

---

* "कर्तुं चाशरीरे कर्म्मणि" इत्यर्थमेवेदम् ।

† घुणदष्टरहितां तां हिमाम् ।

केतकीकुसुमसङ्गसुगन्धी
नर्त्तयन् सरलतालतमालान्।
मारुतोऽब्धिपयसां कणवाही
सेवितस्तमकरोत् गतखेदम्॥ ६॥

उत्पतत्पतदनाविलवारैः
श्यामले वपुषि तस्य पयोधेः।
फेणराजिमवलोक्य च राज्ञा
सस्मरे हरितनौ वनमाला॥ ७॥

वीचिबाहुमतिलोलमम्बुधिः
प्रेरयंस्तटभुवि प्रसारितम्
पण्यराशिमपहृत्य सत्वरं
प्रद्रवन्ननुसरद्भिराकुलैः;
नैगमैः प्रतिहृतावशेषितं
द्राक् निपत्य सलिले निमज्जयन्
दुःखितेपि नृपचेतसि क्षणं
नन्दथुं निरुपमं व्यजीजनत्॥ ८॥

नौषु नैगमगणांस्त्वरमाणान्
पण्यमावपत आकुलनादम्।
तांश्च एवमपरोहयतः कान्
दृष्टवान् नरपतिः सहदृष्णम्॥ ९॥

वाहिनीशतसहस्रपरीतं
भूभृतां शरणमेनमभीतिं।
पश्यतोऽस्य जलधिं बहुसत्वं
सा दशा स्मृतिमगाच्च पुराणा * ॥ १० ।

दयितजीवनमस्य वधूमुखा-
नलसमेष्टवियोगजवह्निना।
जलधिमुत्कलिकाशतसंकुलं
स्वमिव सोऽयमबोधि महीपतिः † ॥ ११ ।

सन्ध्येव रक्ताम्बरधारिणी द्राक्
तारानुरक्ता विधृताक्षमाला।
जटाः पिशङ्गीर्दधती च काचित्
तपोधना तं नृपमाससाद ॥ १२ ।

उवाच चैनं वद भद्र! कस्त्वं
कथं सुरम्या नगरीमहासीः?
इहासि कस्मात् वणिजां कठोरैः
घोषैः समुद्देजितकर्णरन्ध्रः ॥ १३ ।

---

* वाहिनीनां सेनानां नदीनाञ्च शतैः सहस्रैश्च परीतम् पक्षे परीतञ्च भूभृतां पर्वतानां अभीति शरणं पक्षे अभीतेः शरणम् बहुसत्त्वम् पक्षे बहुसत्त्वम् एनं जलधिं पश्यतः अस्य नृपस्य सा पुराणा दशा स्मृतिम् अगात्।

† अथ स महीपतिः स्वीयम् वधूमुखानलसमः वडवाग्नितुल्यः यः इष्टवियोगः प्रियावियोगसम्भूतः वह्निः तेन दयितजीवनम् दयितं जलम् जीवितञ्च यस्य तं उत्कलिकाशतैः विरहविलापैः तरङ्गैः संकुलम् जलधिं स्वमिव आत्मानमिव अबोधि ज्ञातवान्।

त्वद्भावमालोक्य समर्थयेऽहम्
प्रनष्टमन्विष्यसि किञ्चिदिष्टम् ।
पृच्छामि किञ्चित्, यदि तद्रहस्यं
न स्यात् तदाख्याह्यनिगूढ़तत्त्वम् ॥ १४ ।
इदं वयो रूपमिदं तवायं
वेशश्च निष्ठारहितं मनश्च ।
न संवदन्त्येव परस्परं, तत्
मन्ये तथा नासि यथासि वेशे ॥ १५ ।
कश्चित् वणिक् ते वणितामहार्षीत्
अन्वेष्टुमेनां किमिहागतोसि ।
अत्यद्भुता भद्र कथा तदीया
शृणु स्थिरात्मा ननु कथ्यते सा ॥ १६ ।
कषायरक्तं वसनं वसाना
कपर्दिनी पत्युरिवानुकारे ।
गौरीव सासीत् प्रणमद्भिरेभिः
सांयात्रिकैः पूजितपादपद्मा ॥ १७ ।
निरङ्कचन्द्रप्रतिमाननायाः
न कुड्मलं यद्यपि नातिफुल्लम् ।
तस्या नवं यौवनमम्बुजाख्याः
पुष्पं विकाशोन्मुखमन्वकार्षीत् * ॥ १८ ।
तथापि तस्यां वणिजश्च हत्तिम्
अद्धुर्जनन्यामिव मातरीव ।

* अन्वकरोत् ।

सन्तापिनो सत्यपि निर्वृतेवा-
पत्यैः परीतेव निनाय कालम् ॥ १९ ।
कार्त्तान्तिकः कोपि नृपाय गत्वा
न्यवेदयत् काचिदिहास्ति नारी ।
करोति यस्यामनुरागिणीं स्वे
समागरा भूर्ननु तस्य हस्ते ॥ २० ।
अन्विष्य राजा निपुणं समन्तात्
शिपे तरौ तस्य च नैगमस्य ।
ददर्श कार्त्तान्तिकदर्शितां तां
दृष्ट्वा च तं नैगममित्युवाच ॥ २१ ।
नार्य्यानया मे सुमहद्धि कार्य्यं
साम्ना च दानेनच विग्रहेण ।
ग्राह्येयमेतत् विदुषा त्वया तत्
यदात्मनोनं क्रियतां विचार्य्य ॥ २२ ।
इत्थं नृपेणाभिहितः स साधुः
प्रत्याह तं मर्म्मणि ताड़ितः सन् ।
सम्राज एषा सुगृहीतनाम्नः
श्रीवत्सराजस्य च धर्म्मपत्नी ॥ २३ ।
राज्यात् च्युतोसौ शनिपीड़नेन
साध्व्यानया काननवासमागात् ।
इयं हि साक्षात् हरपूर्व्वपत्नी
दक्षात्मजेवेति निबोध देव ॥ २४ ।

इत्थं ब्रुवत्येव च साधुवृत्ते
तस्मिन् दुरात्मा प्रतिभावलेन।
उवाच राजा शृणु सार्थवाह!
येनासि दण्डेन विना विमुक्तः॥ २५।

श्रीमानशेषचितिभर्त्तृमौलि-
रत्नांशुनीराजितपादयुग्मः।
प्राग्देशराजः खलु सार्व्वभौमः
लेखेन मामादिशदेवमद्य॥ २६।

श्रुत्वेति राजा स्वगतं न्यगादीत्
कान्तान्तिकोयं महतो भयस्य।
स्थानं, न पत्रं प्रहितं मयैतत्
प्रकाशमूचे भगवत्यथेति ?॥ २७।

तपस्विनीवेशतिरोहितात्मा
राज्ञी हृता केन च नैगमेन।
श्रुतं मयासौ तव राजधानीं
वाणिज्यकार्य्याय गतः सवर्गः॥ २८।

तत् पत्रपाठस्य विराम एव
तस्याः प्रियाया निजराजधान्याम्।
प्रवेशकालत्वमवश्यनेयो
यत्नेन साधुर्नच दण्डनीयः॥ २९।

प्रयाणकैस्तावदहं यतिष्ये-
ऽच्छिन्नैर्वहंस्ते नगरं प्रयातुम्।

स्वल्पेन कालेन, दिनान्यमूनि
यत्नेन कान्तां परिपालयेति* ॥ ३० ।

निशम्य वाक्यं परिशुद्धभावा
दुरात्मनस्तस्य च दुष्टभावम् ।
विवोढुमीशा न हि सा, कथं वा
दैवस्य निर्बन्धमलं निरोद्धुम् ॥ ३१ ।

चक्रे मतिं राजपुरीप्रवेशे,
राजा हि सर्वैकपरशक्तिरस्मिन्,
एवं प्रवृत्ते किमहं करोमि
मत्वेति साधुं चरणौ स्मरन्तम् ;
रुदन्तमाश्वास्य विशिष्टवाग्भिः
दुर्दैवनुन्ना पतिसङ्गमोत्का
प्रहृष्टहृर्या परिचारिकाभि-
रवेष्टिता राजपुरीं विवेश ॥ ३२, ३३ ।

दिनेषु गच्छत्सु नृपास्यरन्ध्रात्
यो निर्गतस्तीक्ष्णविषो भुजङ्गः ।
तेन प्रदष्टा नृपभासिनी सा
मुमूर्च्छ साध्वी न्यपतच्च पृथ्वाम् ॥ ३४ ।

हा विप्रलब्धास्मि दुराग्रहेन
नान्योऽस्ति मुक्तेर्मरणादुपायः ।

---

* अस्मिन्, निरन्तरं, प्रत्यहं: गमने बहुन् ... अल्पेन कालेन तं तव नगरं प्रयाहं यतिष्ये ।

इति प्रयार्थ्य क्षितिपालपत्नी
देहं निचिक्षेप समुद्रनीरे ॥ ३५ ।
अहो किमन्यत् कुरुते वराकी-
त्युक्ता नृपः प्राप विषादहर्षौ ।
श्रुतं मया यत् श्रवणीयमम्ब !
तद्गच्छ गच्छेति च तां जगाद ॥ ३६ ।
"वत्स साधो ननु सावशेषं
प्रशान्तचित्तः शृणु तत् नरेश !" ।
"एषोस्मि शुश्रूषुरलं विलम्ब्य
ब्रूयाः" "निशाम्य * प्रकृत वदामि" ॥ ३७ ।
भूतेन केनाप्यनिरूप्यरूपे-
णोत्क्षिप्य भूपाय ददे वराकी ।
राजा पुनस्तां यतते स्म हस्ते
कर्त्तुं सतीं स प्रतिकूलभावाम् ॥ ३८ ।
प्रसाद्यमानाप्यखिलैरुपायैः
यदेयमस्मिन् न बबन्ध भावम् ।
तदा वशीकारविधानदक्षो
राज्ञा द्विजः कश्चिदहो न्ययोजि ॥ ३९ ।
वशीकृतेर्मन्त्रबलेन हाहा
सतीत्वसर्पः किल रुद्धवीर्य्यः ।
नताननोऽभूत्, नृपतिं सती सा
प्रेमाभिधानेन बबन्ध राज्ञा ॥ ४० ।

* निशाम्य—शृणु।

सेयं समायाति नरेन्द्रकण्ठं
दोर्वल्लिपाशेन दृढं निबध्य ।
निर्लज्जता मूर्त्तिमतीव साक्षात्
समुद्रतीरे परिचारणार्थम् ॥ ४१ ।

पश्येत् कदाचित यदि मां नृपेन्द्र
कर्णेजपेयं वदतीति मह्यम् ।
क्रुध्यत् भृशं तत् गमने मठाय
विधीयतां मेऽनुमतिर्महात्मन ॥ ४२ ।

सम्भाव्यतेऽस्मिन यदि देवि ! सिन्धौ
शौचं, शनावन्यगुणज्ञता वा ।
निदर्शनेऽस्या पतिदेवताना
ततः प्रियाया व्यभिचारदोषः ॥ ४३ ।

यथोदधेरस्य पुरा हि गोष्पदं
यथा हि पादः पुरतो महागिरेः ।
श्रियः पुरः सूर्य्यसुतो यथा तथा
क्रिया सतीत्वस्य पुरोभिचारिको ॥ ४४ ।

धर्म्मोपदेशं प्रददासि वद
सतां हि वाणी गुणमेव वक्ति ।
शनिः परेषामहितं विधत्ते
पतिः परं सेवत एव साध्वी ॥ ४५ ।

विषप्रदः यदि चन्द्रतः स्यात्
प्रभूतधारिस्त्वमियात् क्षितिश्चेत् ।

खलोऽनुतिष्ठेत् यदि साधुकार्य्यम्
तथापि साध्वी न पतिं विजह्यात् ॥ ४६ ।
अह्येयमेतत् न वचस्त्वदीयं
प्रयाहि दूरं, नृप एति भद्रे ।
सा तापसीत्यं गदितैव राज्ञा
विपक्षचित्तेव तिरोदधे द्राक् ॥ ४७ ।
तस्यां गतायां नृपचक्रवर्त्ती
दध्यौ मनस्येवमपास्तधैर्य्यम् ।
प्रष्टव्यतै कारणमत्यमस्याः
मिथ्याभिधाने न मया विचार्य्य ॥ ४८ ।
तदा शनिः किं कृतकार्य्यतां गतः ?
बलस्य भावं नृपतौ प्रियाञ्जसा ?
दृष्टं परं भावयतोपि पश्य मे
विशुष्यति द्राक् रसधातुरात्मनः ॥ ४९ ।
प्रभुत्वमेकातपवारणं गतम्
पुरो समुच्छेदमितामरावती ।
तथापि चिन्तेत्युतिसर्व्ववैभवो
ममास्ति चिन्तामणिरित्यनाकुलः ॥ ५० ।
योऽहमेकचर एव हस्तिनां
यूथमस्मि विनिरोद्धुमीश्वरः ।
तत्र जीवति मयि क्षितीश्वरे
च्छद्मना तमिसमस्विदुर्लभम् ;

दूषयन् मणिमसौ नृपाधमो
युक्तदण्डमनवाप्य यास्यति ?
न चमेऽस्य ननु तादृशीं कदा
दुष्क्रियां कृतवतो विजानतः ॥ ५१, ५२ ।

कस्य रत्नममलं छलात् यशो-
ऽदूषयः स्मरशराहतः स्मर ।
रक्षितो भव विमूढ़ सैनिकै-
रद्य नास्ति नरकाक ! निष्कृतिः । ५३ ।

एकलोस्मि ननु तेन किं भिया
सिंह एकचर एव वारणान् ।
हन्ति वीतगणनांस्तथा रविः
सहृणोति मद्यौड़ुजालकम् ॥ ५४ ।

नास्ति सैन्यमसिरम्बुदद्युति-
र्नास्ति, तेन किमहा प्रयोजनम् ?
एष एव यमदण्डसोदरो
बाहुदण्ड इभकुम्भसन्निभे ;
तस्य मूर्ध्नि हरिवत् समापतन्
तं कृतान्तभवनं सुदुर्मदम्
प्रापयत्ववनिरस्तु सर्वथा
पापभारविनिमुक्तनिर्वृता ॥ ५५, ५६ ।

इां लक्ष्मीवचनात् शनैश्चरकृतध्वान्तान्धकारे भवे
यां तारामचलामचिन्तयमहं दिङ्निर्णयेपूज्ज्वलाम् ।

सा भीमा ननु वञ्चनापटुरियं तीव्रा श्मशानोत्थिता
सञ्जाता मम भाग्यविप्लववशात् उल्केति नाज्ञासिषम् ॥ ५७।
साध्वीत्वं खलु तेजसां सुमहतां राशिर्मया ज्ञायते
स्वल्पेनाप्यभिचारमन्त्रमहसा किं तत् तिरोधीयते ।
किं दीपेन रविस्तमिस्रकरिव. सहारक: सिंहवत्
दीप्तया स्त्रियते कदापि वद रे नोपायये वञ्चकि ॥ ५८ ।
तत्†ते नास्ति ततस्त्वया पतिकुल शङ्खेन्दुकुन्दोज्ज्वल
घोरेऽवर्णमहाम्बुधौ चलमते । भागाशया मज्जितम् ।
श्रीवत्सो नृपतिर्विलुप्तविभवो यत्तेऽभवत् भाजन
विद्विष्टस्य, न तेन ते स्तुतिपदे निन्दा करोमि क्षण ॥५९।
यच्चास्याखिलविश्वमुज्ज्वलयतो रात्रिंदिव शुभ्रया
कीर्त्त्या कीर्त्तिविलोपिनी कृतवती गर्ह्या क्रियामीदृशीम् ।
स्थाने तच्च भवादृशश्चलमतेः, कावात्र सन्मार्गतो
भ्रष्टा पश्यति भर्त्तुरिष्टमथवानिष्ट स्वरान्धा वधू: ॥ ६० ।
सम्भाग: खलु ते समाप्तिमगमत् पापेऽधुना गम्यता
श्रीवत्सो ननु पुंश्चलीपतिरिति प्राप्तापकीर्त्तिर्न वा ।
जीवत्येव, नवेयमस्य दयिता चिन्ताभिधाना सता
वेश्यावृत्तिमुपैषुपीति महती कुत्साप्युपेक्ष्या मया ॥ ६१ ।
तत् त पापकृत ‡ निपात्य नृपशुं त्वा केशपाशे दधत्
गभीरे कमलाप्रसूतिसलिले मग्नो भविष्याम्यहम् ।

---

* पश्चात् । कुत्सिटे ।, क्रियासम्बोधनमेतत् ।   † तत् साध्वीत्वम् ।
‡ पाप कृतवान् इति पापकृत् तम् ।

दूषयन् मणिमसौ नृपाधमो
युक्तदण्डमनवाप्य यास्यति ?
न च मेऽस्य ननु तादृशीं कदा
दुष्क्रियां कृतवतो विजानतः ॥ ५१, ५२ ।

कस्य रत्नममलं छलात् पशो-
ऽदूषयः स्मरशराहतः स्मर ।
रचितो भव विमूढ़ सैनिकै-
स्त्वा नास्ति नरकाक ! निष्कृतिः । ५३ ।

एकलोऽस्मि ननु तेन किं भिया
सिंह एकचर एव वारणान् ।
हन्ति वीतगणनांस्तथा रविः
संहृणोति महसोड़ुजालकम् ॥ ५४ ।

नास्ति सैन्यमसिरम्बुदद्युति-
र्नास्ति, तेन किमहा प्रयोजनम् ?
एष एव यमदण्डसोदरो
बाहुदण्ड इभकुम्भसन्निभे ;
तस्य मूर्ध्नि हरिवत् समापतन्
तं कृतान्तभवनं सुदुर्मदम्
प्रापयत्त्ववनिरस्तु सर्व्वथा
पापभारविनिर्मुक्तनिर्वृता ॥ ५५, ५६ ।

इत्थं लक्ष्मीवचनात् शनैरपकृतध्वान्तान्धकारे भवे
यां तारामचलामचिन्तयमहं दिङ्निर्णयेपूज्ज्वलाम् ।

सा भीमा ननु वञ्चनापटुरियं तीव्रा श्मशानोत्थिता
सञ्जाता मम भाग्यविप्लववशात् उल्केति नाज्ञासिषम् ॥ ५७।
साध्वीत्वं खलु तेजसां सुमहतां राशिर्मया ज्ञायते
स्वल्पेनाप्यभिचारमन्त्रमहसा किं तत् तिरोधीयते ।
किं दीपेन रविस्तमिस्रकरिणः संहारकः सिंहवत्
दीप्तया संव्रियते कदापि यद रे नीचाशये बन्धकि* ॥ ५८ ।
तत्† ते नास्ति ततस्त्वया पतिकुलं शङ्खेन्दुकुन्दोज्ज्वलं
घोरेऽवर्णमहाम्बुधौ चलमते ! भोगाशया मज्जितम् ।
*श्रीवत्सो नृपतिर्विलुप्तविभवो यत्तेऽभवत् भाजनं*
विद्विपस्य, न तेन ते स्तुतिपदे निन्दा करोमि चणं ॥५९।
यच्चास्याखिलविश्वमुज्ज्वलयतो रात्रिंदिवं शुभ्रया
कीर्त्त्या कीर्त्तिविलोपिनीं कृतवती गर्ह्यां क्रियामीदृशीम् ।
स्थाने तच्च भवादृशश्चलमतेः, कावात सन्मार्गतो
भ्रष्टा पश्यति भर्त्तुरिष्टमथवानिष्टं स्मरान्धा वधूः ॥ ६० ।
सम्भोगः खलु ते समाप्तिमगमत् पापेऽधुना गम्यतां
श्रीवत्सो ननु पुंश्चलीपतिरिति प्राप्तापकीर्त्तिर्न वा ।
जीवत्येव, नवेयमस्य दयिता चिन्ताभिधाना चला
वेश्याहस्तिमुपेयुषीति मद्बलो कुत्साप्युपेक्ष्या मया ॥ ६१ ।
तत् तं पापकृतं‡ निपात्य नृपशुं त्वां केशपाशे दधत्
गभीरे कमलाप्रसूतिसलिले मग्नो भविष्याम्यहम् ।

---

* बन्धकि ! कुल्टे !; चिन्तासम्बोधनमेतत् ।  † तत् साध्वीत्वम् ।

‡ पापं कृतवान् इति पापकृत् यम् ।

इत्युक्त्वा नृपतिः समीक्ष्य पुरतो यान्तं प्रतिद्वन्द्विनं
चिन्तालिङ्गितविग्रहं कलुषया दृष्ट्या क्षणं तस्थिवान्॥६२॥
सर्व्वं तथ्यमहो ग्रहो नु बत भोः स्वप्नो नु माया नु वा
रे पापाशय ! तिष्ठ तिष्ठ नरकिन् मारान्ध ! मारात्मक ! ,
मय्येसं भुजदण्डमुद्यतफणं प्रोच्चण्डदण्डाहतं
धावन्तं तव दंशनाय भुजग, नाशाय सज्जो भव ॥ ६३ ।
निष्पापा रक्षिवर्गाः किमिति चलदृशः सम्भ्रमात् याथ यूयम्
निर्दोषाणां शिरःसु प्रपतति न कदा बाहुदण्डो मदीयः ।
सोऽहं श्रीवत्सराजो मम खलु दयितां छद्मनादूषयत् य-
स्तं पापं भूपरूपं प्रदमननिपुणं ध्यानमन्वेषयामि ॥६४।
इत्युक्त्वा नेत्रनोर्य्यज्ज्वलदनलशिखादग्धदेहे जनौघे
वाह्याघातप्रकोर्णे द्रुतवति सभयं लब्धमार्गः स राजा ।
मुक्त्वा निष्पिष्य गात्रं तदहितनृपतेर्भीतभोताश्च चिन्तां
धृत्वा कण्ठे चलाङ्गीं जलनिधिसलिले द्राक् पतन् मज्जतिस्म॥६५

इति श्रीश्रीवत्सचरिते महाकाव्ये मायासमुद्रप्रवेशो
नाम चतुर्दशः सर्गः ।

•

पापाया देहभारं न वहतु वसुधातःपरं सारमेयाः
जीवन्तीं रज्जुबद्धामवनिनिपतितां भुञ्जतां तां निकामम्।
मन्ये तत्पापवह्नेः प्रबलतरशिखाप्लुष्टनिःशेषवारि-
र्यातोऽम्भोधिर्मरुत्वं क नु खलु कमले! प्रद्रुता सा पिशाची ॥६।

इत्यपास्तधृतिरङ्गमुत्सृजन्
रोषरक्तनयनः सवेपथुः।
गन्तुमिच्छुरथसिन्धुकन्यया
सस्मितं नृपतिरभ्यधायि सः ॥ ७।

धिक् पतिं जनकनन्दिनीं पुन-
र्गां गतामिव पतिव्रतामिमाम्।
सौरिणा विकृतबुद्धिरस्य यो
मत्समत्वमिति वक्तुमिच्छति ॥ ८।

तात! ते न वचसा प्रदूष्यते
तच्चरित्रममलं स्वभावतः।
किं रजोभिरनुपज्यते कदा-
प्युद्धतैः प्रकृतिनिर्मलं नभः ॥ ९।

गाङ्गमम्बु हरिपादपद्मजं
नीललोहितजटाधृतं शुचि।
किं कदापि मलदूषितं भवेत्
नष्टपावनविचित्रशक्ति वा ॥ १०।

भीषणैर्विषधरैरिवोर्म्मिभिः
संकुलं चलदनेकयादसम्।

तालनदतटमम्बुधिं पुरा
  पश्यसि स्म यमिहेत्य धन्वनि* ॥ ११ ।
सूर्य्यसूनुकृतया च मायया
  धन्वनीह भवतस्तदात्मिका ।
जायते स्म ननु वत्स मोहनी
  भ्रान्तिराहतविवेकवैभवा ॥ १२ ।
या समेत्य धृततापसीव्रता
  तुभ्यमद्य सकलं न्यवेदयत् ।
सौरिरेव बहुमाय आत्मनः
  कार्य्यसाधनपरस्तयाभवत् ॥ १३ ।
पुत्रदारसुखभावमात्रके-
  ऽतात्त्विके धृततदात्मचिन्तनः ।
लोक एष हरिमायया यथा
  जीवनं नयति सौख्यदुःखतः ॥ १४ ।
एवमेव शनिमायया भवान्
  लोकयन् प्रियतमामतात्मिकाम् ।
सेयमित्यनुपपन्नसंशयः
  क्रोधवेगविकृतेन्द्रियोऽभवत् ॥ १५ ।
या सदेर्ष्यति सुत ! प्रियां प्रियः
  सैव सङ्गमपरेण चेदियात् ।
स्थान एव कुरुते तयोचिता
  क्रोधविह्वलमतिं पतिं हि सा ॥ १६ ।

* धन्वनि—मरुभूमौ।

सान्यपूरुषसङ्गदूषिता
दृश्यते स्म भवताद्य सम्मुखे।
त निपात्य भवता निगृह्य तां
स्थान एव जलधौ न्ययाति यत्॥ १७॥

यत्तु ते मथयितुं जगत्पतिः
सौरिमस्तकरुण न्ययूयुजत्।
हन्त ते विकृतिकारणेऽपि तत्
नाभवत्त्वमपधैर्य! जृम्भितम्॥ १८॥

ईर्षया विकृतचित्तवृत्तितां
याति पामरजनो बलोद्धतः।
वृत्तिरस्खलितशान्तिरापदि
त्वादृशां हि सदृशी महात्मनाम्॥ १९॥

वात्यया प्रतिहतः सरित्पतिः
क्षुब्धता परिगतोऽपि न स्थितिम्
मुञ्चते, न च कदा मनागपि
स्वच्छतां त्यजति धैर्यवत्तया॥ २०॥

सागरेण सम एधि धैर्यवान्
इत्युदाहरति सर्व्व आशिषि।
सौरिकल्पितमायया भवान्
धैर्यवत्त्वमतिसर्व्वमत्यजत्॥ २१॥

शक्तिरावरितुमद्र! सतीत्वं
नान्यतेजस इहास्ति गरीयः।

जानतापि भवता नु महार्घ्यं
त्यक्तमेव तदहो गुणरत्नम् ॥ २२ ।

श्रीरुवाच सदसि स्फुटमस्या
विद्यते पतिपरत्वमनर्घ्यम् ।
अद्य तस्य विपरीतमिवास्याम्
लोकयामि यदिय शनिमाया ॥ २३ ।

नेत्ररोगवशतोऽपि हि रज्जौ
भ्रान्तिरुद्भवति घोरमहाहेः ।
यद्वदेव हि तथाद्य मरस्याँ
तद्भ्रमो भवति नात्र विकल्पः ॥ २४ ।

इत्यमेव समवधार्य्य तत्क्षणे
दातुमेव पदवीमधि क्षमः ।
किं विहाय वनितावधे घृणा
ता समुद्रसलिले न्यपातयः ॥ २५ ।

आत्मघातमतिसर्व्वपातकं
कुर्व्वते प्रतिविधीयते हि यः ।
लोकः इन्दुरविरश्मिवर्जिता
न स्मृतः किमिति सोऽतिभीषणः ॥ २६ ।

सार्व्वभौमनृपते. प्रियाभवत्
पुण्यलोति परितः प्रसर्पतः ।

---

* आत्मघातमतिसर्व्वपातकम् आत्मघातं कुरुते जनाय इन्दुरविरश्मिवर्जिता या
लोक प्रतिविधीयते सर्वभोगेन ... किमिति न स्मृत ।

विश्यदेव परिवादतो भवान्
अत्यजत् नरकपातसाध्वसम् ॥ २७ ।
यद्यहं समुपसृत्य भवन्तं
क्रोड़ आशु न पतन्तमधास्यम् ।
अत्र वह्निसमसैकतभौमे
हा मरौ गततनूरभविष्यत् ॥ २८ ।
ताड़ितः प्रतिपदं यमदूतैः
दष्टगात्रनिचयः क्रमिभिस्तैः ।
दुर्वचं तदतिदुःसहकष्टं
यत्र तत्र निरये त्वमयास्यः ॥ २९ ।
इत्युदीरितमिदं कमलायाः
वाक्यमङ्गतरसं स निपीय ।
भूपतिः प्रबलवेगमनेष्ट *
क्रोधमित्यमवदच्च विनम्रः । ३० ।
प्लुष्टदेह इव घोरशिखाभिः
प्राक् प्रयाति मनसो गुणराशिः ।
वेद्मि मातरतितीव्रविदाह-
स्तत्परश्च समुदेति हि रोषः । ३१ ।
"यां चिन्तयामि सततं मयि सा विरक्ता"
सा चान्यपूरुषगता पतिता च दृष्टौ ।
तस्मिन् घृणे रुधिरमांसवसोपदानो
धीरो ध्रियेय नरकपातभियेत्ययुक्तम् ॥ ३२ ।

---

* अनेष्ट—निरुद्धवान् । "कर्तृस्थे चाशरीरे कर्मणि" इत्यात्मनेपदम् ।

आसीत् सुवृत्तसहिता वनिता विघोर-
संसारसागरसमुत्तरणे वहित्रम् ।
तस्या वियोगविषदिग्धकलेवरस्य
मूर्च्छा न मे, तदपि नास्ति ममात्मसत्ता ! ॥२३॥

ऐन्द्रे पदे जननि ! शापवशात् महर्षे-
र्भ्रष्टयापि त्वयि जलं जलधेर्विशन्त्याम् ।
हाहारवैर्मुखरिताखिलदिग्विभागो
विष्णू रुरोद विकलोऽस्तमितात्मसत्त्वः ॥ २४ ॥

तस्याश्रुबिन्दुनिकरः पतितः समुद्रे
मुक्ताफलत्वमगमत् सततोऽविरामम् ।
नक्षत्रतामुपगतो गगने विकीर्णो
दृष्टः क्षितौ कुमुदभावमियाय नूनम् ॥ २५ ॥

दृष्ट्वा दलान्तविगलद्भिरहो तुषारैः
साश्राः वहद्भिरनिलेन समुच्छ्वसन्तः ।
उच्चावचैः खगरवैः प्रविमुक्तकण्ठाः
अद्यापि सागरतटेऽनुरुदन्ति विष्णुम् ॥ २६ ॥

धैर्यं तथापि विपुलं पितुरेव विष्णोः
चिन्ता वियोगविधुरस्य ममाद्य यातम् ।
मासाष्टकं, न गलितं नयनात् मात-
र्बिन्दुप्रमं सलिलमप्यि तथाप्यधीरः ॥ २७ ॥

दिवि पीयूषे वा नलिनशयने पुष्पखचिते
श्मशाने वा भोगे मलयपवने भंजनि च वा ।

स्तवैऽवज्ञायां वा ननु स्मरति यैः स्मरहरो
जहौ सोपि क्रोधात् इतर इव धैर्यं कनखले* ॥३८
स तारायाः नाथो जननि ! यदवस्थः सुरगुरुः
शशापेन्दुं क्रोधादहमपि तदा तादृशदशः ।
प्रियां कर्षन् सिन्धौ न्यपतमतिरोषान्धितमनाः
असूर्य्यं लोकं तं गणयनतिघोरं बहुव्रणम् ॥ ३९ ।
अशक्तो द्रष्टुं तामपरपुरुषासङ्गमुदितां
शनैर्मायानिघ्नोऽशिवमकरवं यच्च सहसा ।
इहा तन्मूला मे दशति हृदयं ग्लानिरवशं
तदागः चन्तव्य तनयकृतमित्येव जननि ! ॥ ४० ।
प्रसीद मातर्वद कुत्र चिन्ता ?
किं वृत्तमस्याः ? म्रियते किमेषा ?
एव शनैः क्रीड़नकस्व भूत्वा
जीवामि कष्टेन कियच्चिरं वा ? ॥ ४१ ।
इत्येवमुक्ता चितिपेन लक्ष्मीः
तमेवमाह प्रतिबोधयन्ती ।
चिन्तार्थयालं ननु चिन्तया ते
सुखेन मास्ते वणिजां तरुणाम् ॥ ४२ ।
वरेण सूर्य्यस्य विरूपरूपा
वर्षीयसी श्विचितसर्व्वगात्री ।
दुर्गन्धदुर्गम्यतया विदूरात्
त्यक्ता जनैर्निर्दितिमेति चिन्ता ॥ ४३ ।

* कनखलम्—दक्षयज्ञस्थानम् ।

तारा भुजङ्गी भुजगः स शम्भु-
भूत्वानिशं रक्षति तां वरेण्याम्।
क्षुधापिपासारहिता च साध्वी
ध्यायत्यजस्रं हृदयस्थितं त्वाम्॥ ४४।

सुखानुभूतिः स्वदतेतरां यत्
जनाय दुःखानुभवात् परं, तत्।
आजन्मसौख्योचितमीदृश त्वां
दशान्तरं लम्भयति स्म विष्णुः॥ ४५।

दुःखावसानं भविताशु नूनम्
यावत् स कालो न समेति वत्स!
तावत् चिदानन्दवनं* मनोज्ञ-
मध्यास्य कालं नय धीरचित्तः॥ ४६।

न तत्र सौरिः सुरभिप्रभावात्
प्रवेष्टुमीशो, ननु तेन तत्र।
कृतप्रसादस्य हि दैवधेन्वा
यास्यत्यनेहा† तव तात! सौख्यात्॥ ४७।

प्रदर्शयंस्तत्पथमग्रतस्ते
विहायसा यास्यति यः कपोतः।
समागतः सोऽयमतोऽवरम्यः
कालातिपातेन कृतं प्रयाहि॥ ४८।

निःश्रेयसः सुरधामरोहणविधौ, नौका भवाम्भोनिधेः
मन्तारे, दुरितकिल्बिषान्धतमसध्वंसे च हंसस्त्वया।

---

* चिदानन्दवनं—दुर्वासाश्रमः वाल्मीकेरुपवनम्।  † अनेहा—काल।

भैषज्यं गदवारणे नु, रविजप्रोच्चण्डतापाहने
मेघो,मा हरिपादपद्मयुगलं विस्मारि तात! त्वया ॥४९॥

इति जलनिधिकन्या वत्सला फुल्लनेत्रं
नरपतिमुपदिश्य द्यामधिष्ठाय लीना।
सच सुरभिनिकेतं तेन पारावतेन
द्रुतगतिरगमत् तं दर्शिताध्वा क्षणेन ॥ ५० ॥

इति श्रीश्रीवत्सचरिते महाकाव्ये सुरभिनिकेतनाभि-
गमनो नाम पञ्चदशः सर्गः।

---

सोपानपर्व्वाणि शनैस्त्यजद्भि-
रम्भोभिरुद्दण्डसरोजसंघैः।
क्वचित् सरः शंसति भूमिभर्त्ते
निदाघकालोऽत्र विराजतीति ॥ ६ ॥

निमग्नभूयिष्ठमृणालदण्डै-
रुच्छिन्नपत्रै र्जलधारया च।
कह्लाररक्तोत्पलपुण्डरीकैः
क्वचिच्च वर्षागममाह वापी ॥ ७ ॥

पयोधरेभ्यो विगलद्भिरारात्
पयोभिराप्लावितभूमिभागा।
क्वचिच्च निर्धूतरजा विभाति
प्रावृट् यथा सा सुरधेनुराद्या ॥ ८ ॥

स्रोतःसु वक्रं प्रचलत्सु यत्र
भुजङ्गबुद्धिं दधतः समेत्य।
संरुद्धचेष्टा अशनक्रियायां
तद्वद्लघ्वाः शिखिनो विभान्ति ॥ ९ ॥

काशैः क्वचित् केशरिकेशराभैः
सप्तच्छदैस्तीव्रविसारिगन्धैः।
शरत् समेतेति धराविभागः
स्फुटाक्षरं वक्ति नृपाय तस्मै ॥ १० ॥

उत्पत्य पृष्ठे नखरैर्मृगेन्द्रे
कण्डूलगण्डं लिखति * प्रकामम्।

---

* लिखति—कर्षति इति।

अवाप्तकण्डूतिविनोद आस्ते
क्वचित् गजो यत्र निमीलिताक्ष: ॥ ११ ।

क्वचिन्नमत्ग्रीवमदग्रहस्ता
सटां समाकर्षति केशरिण्या: ।
दन्ताग्रलग्नश्च मृगेन्द्रशावं
करेणुका नर्त्तयते प्रहृष्टम् ॥ १२ ।

समुत्फणं नि:सरदग्रजिह्वं
समुत्त्ववोधं नकुली भुजङ्गम् ।
परामृशन्ती सदयं करेण
क्वचित् विचुम्बत्यपि लेढ़ि धीरा ॥ १३ ।

क्वचित् दिवान्धत्वविपर्ययोर्भूत्
युत् कुर्व्वतोस्त्राणनिवृत्तयत्नयो: ।
पित्रो: कुलायच्युतमाप्तकष्टं
ददाति काकी परिरभ्य शावम् ॥ १४ ।

आजन्मसंस्कारवशात् तरक्षु:
मृगे विधत्ते करजप्रहारम् ।
धेनो: प्रभावेण खरास्तदङ्गे
पराक्रमन्ते नखरा न तस्य ॥ १५ ।

अङ्गं तरक्षो: प्रहृते कुरङ्गे
द्रागेत्य शृङ्गेण कपत्वभीते ।
संस्लथलोमा स च मीलिताक्ष:
पतन् क्षितौ लुण्ठति साङ्गभङ्गम् ॥ १६ ।

सोपानपर्व्वाणि शनैस्त्यजद्भि-
रम्भोभिरुद्दण्डसरोजसंघैः।
क्वचित् सरः शंसति भूमिभर्त्ते
निदाघकालोऽत्र विराजतीति ॥ ६ ॥

निमग्नभूयिष्ठमृणालदण्डै-
रुच्छिन्नपत्रै र्जलधारया च।
कह्लाररक्तोत्पलपुण्डरीकैः
क्वचिच्च वर्षागममाह वापी ॥ ७ ॥

पयोधरेभ्यो विगलद्भिरारात्
पयोभिराप्लावितभूमिभागा।
क्वचिच्च निर्धूतरजा विभाति
प्रावृट् यथा सा सुरधेनुराद्या ॥ ८ ॥

स्रोतःसु वक्रं प्रचलत्सु यत्र
भुजङ्गबुद्धिं दधतः समेत्य।
संरुद्धचेष्टा ग्रसनक्रियायां
तद्वद्लच्याः शिखिनो विभान्ति ॥ ९ ॥

काशैः क्वचित् केशरिकेशराभैः
सप्तच्छदैस्तीव्रविसारिगन्धैः।
शरत् समेतेति धराविभागः
स्फुटाक्षरं वक्ति नृपाय तस्मै ॥ १० ॥

उत्पत्य पृष्ठे नखरैर्मृगेन्द्रे
काण्डूलगण्डं लिखति * प्रकामम्।

* लिखति—कर्षति इति।

अवासकण्डूतिविनोद आस्ते
  क्वचित् गजो यत्र निमीलिताक्षः ॥ ११ ।

क्वचिन्नमत्प्रोन्नमदग्रहस्ता
  सटा समाकर्षति केशरिण्याः ।
दन्ताग्रलग्नञ्च मृगेन्द्रशावं
  करेणुका नर्त्तयते प्रहृष्टम् ॥ १२ ।

समुत्फणं निःसरदग्रजिह्वं
  स्वपुच्छबोधं नकुली भुजङ्गम् ।
परामृशन्ती सदयं करेण
  क्वचित् विचुम्बत्यपि लेढ़ि धीरा ॥ १३ ।

क्वचित् दिवान्धत्वविपण्णयोर्भूत्
  क्षुत् कुर्व्वतोस्त्राणनिवृत्तशक्त्योः ।
पित्रोः कुलायच्युतमामकष्टं
  ददाति काको परिरक्ष्य शावम् ॥ १४ ।

आजन्मसंस्कारवशात् तरक्षुः
  मृगे विधत्ते करजप्रहारम् ।
धेनोः प्रभावेण खरास्तदङ्गे
  पराक्रमन्ते नखरा न तस्य ॥ १५ ।

अङ्गं तरक्षोः प्रहृते कुरङ्गे
  द्रागेत्य शृङ्गेण कपत्यभीते ।
संस्तब्धलोमा स च मीलिताक्षः
  पतन् क्षितौ लुण्ठति साङ्गभङ्गम् ॥ १६ ।

मार्ज्जारिका मूषिकशावमङ्का-
गतं स्तनं पाययते प्रहृष्टा ।
क्वचिच्च तच्छाव इवाभियोक्तुं
बद्धक्रमः प्रक्रमते श्वशावम्* ॥ १७ ।

श्येनश्च पारावतपोतमेकं
निपात्यमानं नभसि क्षणेन ।
क्षणाच्च शून्ये परिरक्ष्यमाणं
प्रत्यर्पयत्यक्षतमेत्य पित्रोः ॥ १८ ।

इत्यद्भुतं पश्यत एव राज्ञः
उत्कण्टक निश्चलतारकाक्षम् ।
दयावती सा सुरभिः प्रसन्ना
तीर्णा नभस्तः पुर आविरासीत् ॥ १९ ।

लोमाञ्चिताङ्गी स्फुटनीपपुष्पैः
विलम्बिकेशा शितिमेघजालैः
सहेमहारा तड़ितां गुणेन
सतूर्य्यघोषाम्बुदगर्जितेन ;
विहङ्गमैश्चातकनामधेयै-
रनुप्रयाता मधुरं नदद्भिः
निचोलिनी† श्यामलवल्लिजालैः
सुरेन्द्रचापेन सरत्नमौलिः ;
केकाभिरानन्दनिनादिनी सा
प्रावृट् परापत्य पयस्विनीं ताम्

---

* श्वशावम्—कुक्कुरशावकम् ।   † निचोलिनी—प्रच्छदा ।

उद्वर्त्तिता लोध्ररजोभिरस्याः
शीतोपशान्त्यै शिशिरस्य लक्ष्म्याः ।
शुभ्रा तनुर्गैरिकधातुमिश्रा
गङ्गाम्बुधारेव विभाति रम्या ॥ २८ ।

निलीनभृङ्गेण लसन्मुखश्री-
र्वसन्तलक्ष्मीस्तिलकेन तावत्
संलापिनी कोकिलकूजितेन
मल्लीमतल्लया कृतचारुहासा ;
विकाशयन्ती मुनिमप्यकाण्डे*
ऽकाण्डेऽतिमुक्तानपि† मोदयन्ती
बालार्करागारुणचारुपद्मैः
रक्ताशुकप्रावरणातिहृद्या ;
अशोकगुच्छैः कृतकर्णपूरा
"मुक्ताकलापीकृतसिन्धुवारा"
चूताङ्कुरैर्हृद्वितरम्यभावां
पलाशमालामतिचारुरम्याम् ;
कण्ठे च धेनोः परिधाप्य मन्दं
प्रसर्पता दक्षिणमारुतेन
नात्युष्णशीतेन गताध्वखेदां
करोति ता कामदुघां क्षणेन ॥२९,३०,३१,३२

* हरिन्मणि चम्पकपुष्पमपि प्रविमणि च ।
† वर्तिहारकानपि माधवीकुसुमान्यपि कौरण्टकानपि च ।

शुश्रूषणार्थं नृपतेश्च सर्व्वान्
सत्त्वान् समादिश्य तिरोबभूव ॥ ३८।

मृदङ्गनादं जलदेऽनुकुर्व्व-
त्यामन्द्रमातन्वति मंजु शब्दम्।
प्रसार्य्य बर्हं परितो नरेन्द्रं
मुदा मयूरा ननृतुः सहावम् ॥ ३९।

गुञ्जत्सु वीणाक्कणितानुकारि-
कृतेषु रोलम्बकुलेषु मत्ताः।
चूताङ्कुरास्वादकषायकण्ठाः
श्रोत्राभिरामं जगुरन्यपुष्टाः ॥ ४०।

निरन्तरं ध्यायत एव विष्णुं
स्थानप्रभावात् विगतक्षुधार्त्तेः।
दिनान्यतीतानि कियन्ति तस्य
तस्मिंश्चिदानन्दवने नृपस्य ॥ ४१।

दैत्यारिपादाम्बुजचिन्तनोत्थम्
आनन्दसन्दोहमदुःखभिन्नम्।
आस्वादयन् विस्मृतमर्त्त्यभावो
जीवन् विमुक्तोऽत्र नृपो बभूव ॥ ४२।

तस्मिन्नरण्ये सुरभेर्महिम्ना
रुद्धप्रवेशोऽपि शनिर्विदूरात्।
मायामयं जालमवन्ध्यमायो
भूयोऽपि बन्धुं नृपतिं ततान ॥ ४३।

बुद्धिप्रवृत्तिः खलु मानुषाणा-
मनुप्रयात्येव विधिं * पुरोगम्।
तदन्यथा चेत् कथमस्य राज्ञः
स्वर्णेष्टकानिर्म्मितिवासना स्यात्॥ ४४।

सदा च धेनोः पयसाभिषेकात्
संप्राप्तया निर्म्मलहैमभावम्।
स स्तूपशो निर्म्मितवान् विचित्राः
स्वर्णेष्टका भूपतिरस्तसंख्याः॥ ४५।

इष्टैकदासौ नृपचक्रवर्त्ती
विमोहितः सूर्य्यसुतेन दूरात्।
काश्चित् तरीं सौतिपुरं प्रयान्तीं
बभूव चिन्तार्थसमुत्सुकात्मा॥ ४६।

सीमामतिक्रम्य वनस्य वत्स।
पदात् पदं मास्म गमः कदाचित्।
इत्यन्वगात् सा सुरभिर्नृपालं
शनैश्चरोपप्लववारणाय॥ ४७।

विलङ्घ्य तच्छासनमेष राजा
यत् व्यत्यगात् तद्वनभूमिसीमाम्।
तत्रैव हेतुः खलु मानुषी धी-
र्भवत्यपाये परिमोहिनीति॥ ४८।

प्रियावलोकेन समुत्सुकात्मा
यद्विर्वनादाक्रमणाय सौरिः।

---

* विधिं—दैवनिर्बन्धम्।

समर्थं इत्येवमपि प्रजानन्
नृप स वेला जलधेरियाय ॥ ४९ ।
समेत्य नौका तटमानयेति
पुन पुनर्नाविकमाजुहाव ।
तस्मिन् तथा कुर्व्वति नैगम त
नौकाधिनाथश्च जगाद नम्र ॥ ५० ।
साहायक सौतिपुर यियासो
कुरुष्व साधो ! मम दुर्गतस्य ।
सन्तोष्टका मे कलधौतमय्या
नौका समारोपय ता दयार्द्र ॥ ५१ ।
तद्विक्रयात लब्धधनार्द्धशोध्य
शुल्कोऽधुनाय कुलजा विपन्न ।
निस्वस्तपस्वीति दयार्द्रचेता
सपत्त्वजात नय मा स्वयानम् ॥ ५२ ।
इत्येवमुक्त सद्धि सार्थवाह
ता वाहिता स्वर्णमयी स्वमूल्ये ।
आरोह्य नौका नृपतिश्च हृष्ट
समादिशत् तत्परिचालनाय ॥ ५३ ।
आरुह्य नौका नृपति स लक्ष्मरा
निर्दिष्टरूपा प्रसमीक्ष्य चिन्ताम् ।
कथञ्चिदोष्टे स्म मनोविकार
रोद्धु तया धाय्यमवेक्ष्यमाण ॥ ५४ ।

तां दृष्टवा वीक्ष्य वणिक् प्रलुब्धः
चकार बुद्धिं नृपतेर्विनाशे ।
प्रभ्रंशयामास च तं तरख्याः
सिन्धौ समुत्तालतरङ्गमाले ॥ ५५ ।
तया मङ्ग्या तदवस्थयापि
विधित्सया तद्व्यसनोपशान्तेः ।
अलक्ष्यपातं वहनानुकूलं
निचिक्षिपे द्राक् लघु काष्ठखण्डम् ॥ ५६ ।
नृपस्तदालम्ब्य स्वैव यादसां *
निमग्नमुन्मग्नमनारतं वपुः ।
दधत् स्मरन् दैत्यरिपोः पदाम्बुजं
चणात् परं सीतिपुरं समासदत् ॥ ५७ ।
स तत्र जीर्णे किल पुष्पकानने
क्वचित् तरङ्गैः प्रबलैर्महाम्बुधेः ।
अपीततत्क्षारपयाः मनाक् नृपो
निचिक्षिपेऽविघ्नमलुप्तचेतनः ॥ ५८ ।
व्यतीतबाधं नृपतेः शुभागमात्
समुद्गतैर्नूतनचारुपल्लवैः ।
बहुप्रकारैः कुसुमैः सुगन्धिभिः
विभूषितं तत् वनमाबभौ पुनः ॥ ५९ ।
अशोकगुच्छैः स्फुटकिंशुकैर्जवा-
सुमैः † कुसुम्भप्रमुखैः सुमोद्गतैः ।

* यादसां—जलानाम् । † जवासुमै —जवापुष्पे ।

क्वचित् समीरेण चलद्दलालिभि
ज्वलद्दवाग्नीव रराज तत् वनम् ॥ ६० ।

यूथीभिरानन्दितषट्पदालिभि
शेफालिकाभिः पतिताभिराकुला।
प्राक् सिक्तगात्री मकरन्दधारया
रेजे क्वचित् शुक्लपटावृतेव भूः ॥ ६१ ।

एतत् मदीय कुसुम न तावकं
मा पाहि पुष्पेऽत्र सुधा त्वया सखे।
इत्येवमन्यान्यविवादतत्पर:
पुष्प च पुष्पात् निपतत्यलिव्रजः ॥ ६२ ।

वसन्तलक्ष्म्या सहकारशाखा-
मानम्र्य पद्मे निहिते पदे द्राक्।
द्विरेफझङ्कारमिषेण तस्याः
मञ्जीरमञ्जुक्वणनं बभूव ॥ ६३ ।

वसन्तविस्तारितशोभभारात्
प्रोत्फुल्लरक्तोत्पलराजि रम्यम्।
तरङ्गित धीरसमीरसङ्गात्
चिरात् बभौ तत्र सरः सुतोयम् ॥ ६४ ।

आनर्त्तयन् कुसुमिता विविधाश्च वल्लीः
आघूर्णयन् बकुलमाकुलयश्च मल्लीः।
मन्द वहन् मलयगन्धवहः सुगन्धः
पौष्प रजो दिशि दिशि व्यकिरत् प्रभूतम् ॥६५।

तेनाङ्गकूलपवनेन निषेविताङ्गी
सा मालिनी किमिदमित्यपहाय कार्य्यम् ।
प्रक्रान्तमागतवती* त्वरया वनं स्वम्
आलोक्य विस्मयमगाच्च तथाविधं तत् ॥ ६६ ।

यत् काननं चिरमभूत् परिशीर्णवल्ली-
जालं तदेवमृतुषट्क-विशोभि जातम् ।
कोऽवात्र हेतुरिति सा परिबोद्धुकामा
दृष्टिं ससर्ज परितो निभृतं भ्रमन्ती ॥ ६७ ।

विचिन्वती सा निपुणं वनैक-
देशे जटाभिः स्वयलम्बिनीभिः
कषायरक्तं वसनं वसानं
दधानमाकारमनिर्वृतानाम् ;
दूरेण दृष्टेऽतिरुषा मनोज्ञे
सञ्जातनिर्वेदमनल्पशोकम्
मधुं तपस्यन्तमिवापवर्गे
रनुप्रयातं प्रतिषेधकामैः ;
असंयताभिर्व विशृङ्खलाभिः
अलक्ष्यभालस्थदृशं जटाभिः
सतीवियोगेन विमुक्तसङ्ग
तपः कठोरं खलु तप्यमानम् ;
अदृश्यरूपेण मधुप्रवृत्तिम्
आकालिकीं प्राप्य मनोभवेन

* प्रक्रान्तम्—आरब्धम् ।

सौम्यैः शरैः प्रक्रियमाणमारात्
पति पशूनामिव लक्ष्यमाणम् ;
स्वाङ्गमेव पुनरेत्य विभुत्वात्
जेतुकाममिव काममकामम्
ईश्वरं धृतमुनिव्रतमेकं
विस्मिता पुरुषरत्नमपश्यत्* ॥ ६८—७२ ॥

स्तम्भितेव तमवेक्ष्य युवानम्
निश्चलावयवतामगमत् सा ।
यत्नतस्तदवधूय जड़त्व
स्वैरमेत्य विदधे प्रणिपातम् ॥ ७३ ॥

शुष्कमेतदखिलं वनमेवं
जीवयन् पुनरसावनुभावः ।
मर्त्यदुर्लभमिदञ्च शरीरं
स्पष्टमाह तव सौम्य ! सुरत्वम् ॥ ७४ ॥

सन्निमेयमिदमक्षियुगं ते
च्छायया च सहितं वपुरेतत् ।
दिव्यता प्रतिरुणद्धि तदित्थम्
त्वत्स्वरूपमवबोद्धुमनीशा ॥ ७५ ॥

आत्मतत्त्वमतिसूक्ष्ममगम्यं
ब्रूहि सौम्य ! निखिलं करुणार्द्रः ।

---

* सा मालिनी विस्मिता सती विभुत्वात् पुनः स्वाङ्गमेव एत्य अकामं ईश्वरं जेतुकामं धृतमुनिव्रतं काममिव एकं पुरुषरत्नम् अपश्यत् ।

तर्पय श्रवणकौतुकमस्या:
वर्त्तसे नहि धिया पथि तात ! ॥ ७६ ।

तामथो विहिताञ्जलिबन्धा
पुष्पलाववनिता श्रवणोत्काम् ।
विस्मयेन परवान् श्रुतवार्त्त: *
प्रत्युवाच नृपति: स्मितपूर्व्वम् ॥ ७७ ।

किं ब्रवीति भवती मदागमात्
प्रागभूत् कुसुमवाटिका तव ।
दावदग्धवदिवातिभीषणा
निस्तृणेति लपित प्रलापवत् † ॥ ७८ ।

मामवेहि शनिकोपपीड़ितं
नष्टसर्व्वविभवं वनाश्रयम् ।
कञ्चिदेकममलान्वयोद्भव
श्चचमात्मपरिरक्षणाक्षमम् ॥ ७९ ।

केनचित् मम धनं जिहीर्षुणा
निर्दयेन वणिजा लघीयसा ।
द्राक् समेत्य जलधौ निपातनात्
किञ्चिदन्यदबले ! स्मरामि न ॥ ८० ।

---

* श्रुता वार्त्ता स्वकीयागमनरूप तत् जीर्णं वन पुनरुज्जीवित इति प्रवाद येन
[illegible]ताहश ।

† मदागमात् प्राक् तव कुसुमवाटिका दावदग्धवत् अतिभीषणा निस्तृणा च
[illegible]भूत् ? प्रलापवत् हात लपित भवती किं विमर्ष ब्रवीति।

सैन्धवे पयसि मज्जतोऽपि मे
नार्द्रतामुपगतं यदम्बरम् ।
तत्र मातरिव ते ममाप्यहो
चित्तमेतदनपेतकौतुकम् ॥ ८१ ।

दग्धपूर्व्वमभवत् मदागमात्
काननं रुचिरदर्शनं पुनः ।
यत्त्वयेति कथितं तदप्यहो
सम्भवत्यनुमितं न संशयः ॥ ८२ ।

इत्युपात्तवचनं नृपं पुनः
पुष्पलाववनिता जगाद सा ।
कोप्यसंशयमलौकिकः पुमान्
विद्यते त्वयि कृपापरोऽनिशम् ॥ ८३ ।

तत्र यावदुपपीड़नं शनैः
शाम्यति प्रणतिपूर्व्वमर्थये ।
मन्निकेतमधितिष्ठता त्वया
तावदेव समयोऽतिवाह्यताम् ॥ ८४ ।

श्रस्मि तात ! भवता सपुत्रिणी
त्वं मयासि सुकृतिन् समाश्रकः ।
एतु पुत्र इव लालितो मया
कालमागमयतां भवान् सुखम् ॥ ८५ ।

सुललितहितमेतत् शृण्वतः पुष्पलावी-
वचनममृतधारासन्निभं तस्य राज्ञः।
समजनि मतिरस्याः सद्मयानेऽन्वगच्छत्
प्रकृतिमिव पुमांस्तां सांख्यनिर्दिष्टरूपः॥ ८६।

इति श्रीश्रीवत्सचरिते महाकाव्ये मालिनीसमागमो
नाम षोडशः सर्गः।

## सप्तदशः सर्गः ।

प्रविचित्य विचित्रपुष्पराशिं
रचयन् चारुगुणां स्रजं सुबन्धाम् ।
विदधे नृपतिः स पुष्पलाव्याः
गुरुसाहाय्यमतन्द्रितः सहर्षः ॥ १ ॥

हरिपादयुगं निधाय चित्ते
स्थिरमितरत्तं परिचिन्तयन् स्थितोऽथः ।
सहसा द्रुतमेत्य पुष्पलाव्या
जगदे वाक्यमिदं विपश्चिया सः ॥ २ ॥

चिरमात्मनिगूहनं न युक्तं
सुमहत् पातकमात्मनोऽपहारात् ।
अधुनापि विबोधय स्वरूपं
प्रणिपाताञ्जलियाचितो महात्मन् ॥ ३ ॥

चरणे च करे च लक्ष्यमाणं
निखिलं नृपचक्रवर्त्तिलक्ष्म ।
न तिरोधातुमलं जटादयस्ते
स्फुटमाह च्छलतापसत्वमेतत् ॥ ४ ॥

सुविचक्षण एष बाहुनामा
नृपतौ राज्यमिदं प्रशास्ति सम्यक् ।
खलतां खलतामिवासतीं तां
कृतवान् यदयं विवादमूलम् ॥ ५ ॥

अनपत्यतया क्षितीश्वरोऽयं
प्रियया सार्द्धमपत्यमाप्तकामः ।
सुचिरं समराधयत् यतात्मा
जगदम्बां हरमोहिनीं सभक्तिः ॥ ६ ।

कियता समयेन गच्छतासौ
तनया तत्समुपासनप्रभावात् ।
नृपतिर्लभते स्म काम्यरूपां
स्मरपत्न्यापि दिवि, क्षितौ समाख्या* ॥ ७ ।

निरपत्यतया महोत्सवैस्त-
ज्जननं पुत्रजनिं यथा नृपालः ।
अभिनन्दितवान्, चकार नाम्ना
तनयां तां शुभलक्षणाञ्च भद्राम् ॥ ८ ।

वल्लकीव कलनादिनी सुखात्
सञ्चरन्त्यविरतं जनात् जनम् ।
वीतबाधमपदुःखमत्यगात्
शैशवं नृपसुता क्रमेण सा ॥ ९ ।

पल्लवेष्विव नवेषु धारुणा
चित्रपुष्पनिचयेन हासिना ।
यौवनेन निदधे पदं ततो
भूपजाङ्गनिवहेषु हारिणा ॥ १० ।

जनकस्य वचः प्रमाणयन्ती
भविता सा युवती स्वयंवरा स्वः ।

---

* क्षितौ दिविचापि समाख्या प्रसिद्धरूपया स्मरपत्न्यापि ।

निखिलाश्च नृपास्तदर्थमस्मिन्
समवेता नगरे विचित्रवेशाः ॥ ११ ।
सहसालिजनैर्निजप्रकोष्ठे
विमनाः सीदति हा हताशचित्ता ।
मरणव्यवसायतो वयस्याः
बहुकष्टेन निवारयन्ति मत्ताम् ॥ १२ ।
तां भूपतिः* प्राह निमील्य नेत्रे
किमिच्छसौ हर्षपदे विपन्ना ?
वरं वरीष्यत्यनिषिध्यमाना
कृताभ्यनुज्ञा गुरुणेति जाने ॥ १३ ।
रम्भावती† तं निजगाद भूयः
रहस्यमेतस्य निबोध तात !
श्रीवत्सराजं पतिमाप्तुकामा
माराधयामास चिराय गौरीम् ॥ १४ ।
तस्यै प्रतिश्रुत्य तथेति कामं
विद्या द्वितीया प्रददौ च तुष्टा ।
चिन्तैव भर्त्तुर्भवितासि ह्यद्या
वीरप्रसूरेति वरद्वयं सा ॥ १५ ।
राज्ञां परिज्ञातचरित्रवंशा
रमेति नाम्ना प्रथितास्ति योषित् ।
तया परिज्ञापितमारमादौ
कन्या हणोति नृपमन्यया न ॥ १६ ।

---

* भूपति—श्रीवत्सः। † रम्भावती—सा पुष्पवती ; यस्या नामेतत्।

श्रीवत्सराजः शनिपीड़नेन
विध्वस्तराज्यः प्रिययानुयातः ।
अज्ञातवासं वसति क्वचायं
न कोपि तत् वेत्ति नृपेन्द्रपुत्रि ! ॥ १७ ।

तस्माद्गते सर्व्वे इमे नरेशाः
समाहूता राजसुते ! निशाम्य ।
तयैवमुक्तैव पपात बाला
वल्लीव भूमौ करपत्रलूना* ॥ १८ ।

आख्याय तत् वत्स ! निजं स्वरूपं
स्वः सार्व्वभौमस्य विचित्रवेशः ।
अधिष्ठितो मद्यमपूर्व्वरूप-
च्छटाभिरन्यान् मलिनीकुरुष्व ॥ १८ ।

श्रीवत्सराजः शनिपीड़नेन
विध्वस्तराज्यश्छलतापसः सन् ।
वने वने पर्य्यटतीति वार्त्ता
श्रुता रमायाः प्रमुखात् मयाद्य ॥ २० ।

तैस्तैरुपायैर्ननु वत्स ! मन्ये
नूनं स एवासि नृपाधिनाथः ।
दृष्टोसि, मा कारि वधाय नार्य्याः
ज्ञातप्रभावः; सतिमद्धार्त्तां भ्रा † ॥ २१ ॥

भद्राप्रभावात् शनिपीड़नं ते
निवर्त्तते वत्स ! पुराचिरेण ।

---

* करपत्रलूना—करपत्रेण (खरात्) क्रकचेन लूना छिन्ना।        † धा—भद्रा ।

चिन्तावियोगो ननु भद्रया ते
सुसह्यकष्टो भविता न शङ्का ॥ २२ ।
तां मालिनीं प्राह नृपो विहस्य
प्रत्येति भद्रा वचनं न देव्याः ।
नैराश्यनिर्विण्णमतिस्तदेवं
त्यागाय देहस्य सती प्रवृत्ता ॥ २३ ।
गत्वा त्वमेनां वद राजपुत्रीं
प्रागिष्टलाभस्तदनन्तरं वाक् ।
विनिःसरेत् दैवतवक्त्रपद्मात्
तत् किं मुधा खिद्यसि बालिकेव ॥ २४ ।
प्राप्तोऽपि देहान्तरमन्यलोके
प्रविश्य तं कायमसौ नृपालः ।
समर्थनार्थं वचसः शिवायाः
समेष्यति द्राक् ननु कार्य्यकाले * ॥ २५ ।
मा संशयो भूत् वचने शिवायाः
अतर्कितोपायमवश्यमेव ।
भाविष्यते तेन फलान्वितेन
न विप्लुतार्थं वचनं हि तादृशाम् ॥ २६ ।
रम्भावतीत्थं वचनं नृपस्य
निशम्य हर्षातिशयेन मुदा † ।

* मतोऽपि स राजा योगवृत्तं, मर्यादाकाले स देहं प्राप्य देव्या वचनं सत्यं कर्तुं समेष्यतीत्यर्थः।

† मुदा—पाठिका।

जगाम भद्रासदनं सवेगं
विस्रस्तसान्दोलितकेशपाशा ॥ २७ ॥
तस्यां गतायां सखि भूमिजानिः
व्यचिन्तयत् व्याकुलचित्तमेवम् ।
अये शनिर्मे प्रतिकूलवर्त्ती
सुदुर्घटं संघटयेत् किमेतत् ॥ २८ ॥
देव्या वरीयं कथमन्यथा स्यात्
कथं निखेयो हृदि वा प्रियायाः ।
सापत्न्यगडुर्विषमोऽविषह्यः
देव्या वरो नैव, नृपोद्यमेतत् ॥ २९ ॥
रहस्यमुद्भेत्तुमियं* मदीयं
सुतीक्ष्णबुद्धिः कपटं व्यतानीत् ।
राजावरोधप्रतिबद्धमीदृक्
अन्यः कथं वेत्तु जनो नु गुह्यम् ॥ ३० ॥
न वेत्ति राजा, कथमन्यथासौ
श्रीवत्समात्रे हि निमन्त्रणीये ।
स्वयंवरार्थे दुहितुः प्रजानन्
समाहरेत् वा निखिलान् नृपालान् ॥ ३१ ॥
विज्ञाय वा तं शनिपीडनेन
नृपे निरुद्दिष्ट इति स्वदूतात् ।
धाराग्नि सौरेण कथं स्थिरात्मा
तस्थौ निहत्यान्यवराभिलाषः ॥ ३२ ॥

---

* [illegible]

चिन्तेव भद्रा प्रियवल्लभत्वं
वीरप्रसूत्वञ्च गमिष्यतीति !
वरद्वयं शैलसुता प्रसन्ना
तस्यै ददौ प्रार्थनया विनापि ॥ ३३ ।
विपत्तनारीकृतसविभागे
सकाचिताङ्गी हृदये मदीये ।
सा वत्स्यति प्राप्तमहाधिरेव
या साम्प्रतं हा सविकाशमास्ते ॥ ३४ ।
या नैगमेभ्य. परिरक्षसि त्वं
भूत्वा भुजङ्गो वरदेऽम्ब ! तारे ! ।
चिराय सापत्नमहाधिदूना
श्वसित्यहो त्वद्वरत: पुरा सा ॥ ३५ ।
यथा सतीलाक्रमणात् दयावति !
त्वया सतीयं परिरक्ष्यते प्रभो ।
तथैव सापत्नरनिबन्धनात् पुन:
सुदुस्तरात् सा व्यसनाच्च रक्ष्यताम् ॥ ३६ ।
इति हि धरणिजानेरस्तधैर्यस्य देव्या.
वरमपि गिरिजाया मन्यमानस्य शापम् ।
सपदि निखिलशङ्काच्छित्तये चाधिदर्वेर *
शुभपरिणयशंसी चारु पुस्फोर बाहु: ॥ ३७ ।

इति श्रीश्रीवत्सचरिते महाकाव्ये ससुदितन
श्रीवत्सो नाम सप्तदश: सर्ग: ।

---

* चाधिदर्वेर—मम पीडायाईनाय ।

## अष्टादशः सर्गः ।

सोपानमार्गैः सुकराधिरोहैः
शुक्लेषु रम्येषु महोपचारैः ।
महार्हसिंहासनवत्सु रङ्गे
तुङ्गेषु मञ्चेषु सुसज्जितेषु ;
विटैश्च निर्दिष्टमथो नृपाणां
यथाक्रमं मञ्चमधिष्ठितानाम् ।
तुल्यानुरागेव रराज लक्ष्मीः
"प्रभाविशेषोदयदुर्निरीक्ष्या" ॥ १, २ ।

पूर्वाद्रिशृङ्गेषु निबद्धपंक्ति
यदि स्थिताः स्युर्निवहाः सुधांशोः ।
तुङ्गेषु मञ्चेषु तदा निकामं
स्युरस्य भूपा उपमेयरूपाः ॥ ३ ।

नृपात्मजेयं यदि वेत्ति सम्यक्
द्रष्टुं, तदामावमुमेव भूपम् ।
वरीष्यतीति प्रतिपौरमेवं
सम्भावनाभूत् प्रतिराजलोकम् ॥ ४ ।

तिरस्करिण्यन्तरितावलोका
पौराङ्गना कामपरामवादीत्,
न स्याश्च भद्राभिनिविष्टबुद्धि
र्श्लिष्येत् मते मे यदि सा नताङ्गी ;

प्रवर्त्तयेयं ननु तां तदाहम्
अमुं नृपं कामयितुं वरेण्यम्
रूपानुरूपावयवो य एतान्
विभाति सर्व्वानतिशय्य राज्ञः ॥ ५, ६ ।

भृङ्गालिकृष्णः परिवेल्लिताग्र-
भागः स्रवन् स्नेहमिवांसलम्बी ।
कृष्णोपि रम्यः कुटिलोपि हृद्यः
बध्नाति नेत्रे ननु केशपाशः ॥ ७ ।

यथास्य वक्त्रं शतपत्रमुग्ध
तथैव नीलोत्पलकान्तिहारि ।
कर्णान्तविश्रान्तमतीव सुष्ठु
नेत्रद्वयं चञ्चलतारहारि ॥ ८ ।

अमुष्य मन्दं हसतो विभाति
रक्तेऽधरे प्रोल्लसितप्रभालि ।
विशुद्धवर्णा द्विजवत् द्विजालिः
हीरद्युतिर्हैम इवाङ्गुरीये* ॥ ९ ।

प्रवालरक्तोदरमस्य पाणि-
पादं मुहुः सञ्चलदङ्गुलीकम् ।
नवोषसा रञ्जितमध्यभागं
चलद्दलं पद्ममिवातिभाति ॥ १० ।

---

* हे भामि ! सखि ! मन्दं हसतः अमुष्य राज्ञः रक्ते अधरे प्रोल्लसितप्रभा, द्विजवत् ब्राह्मणवत् विशुद्धवर्णा विशुद्धजातिः पक्षे विशुद्धकान्तिः द्विजालिः दन्तपंक्तिः, हैमे सौवर्णे अङ्गुरीये हीरद्युतिः, हीरकश्रेणिरिव विभाति।

यथारुचीत्थं खलु तस्य राज्ञः
    सौन्दर्य्यसंवर्द्धनतत्परायाम् ।
आरब्धकार्य्यान्तमयातवत्यां
    तस्यां वत प्रौढ़पुराङ्गनायाम् ;
आवेदयिष्यन्निव शक्रपत्न्यै
    स्वयंवरक्षोभनिवारणाय ।
एह्येति तारः पटहप्रणादः
    प्रध्मातशङ्खो गगनं बिभेद ॥११,१२। युग्मकम् ।
रमायतो वेत्रकरा पुरस्तात्
    पश्चाच्च रम्भा वरमाल्यहस्ता ।
तयोर्बभौ मध्यगता कुमारी
    विशाखयोश्चान्द्रमसीव लेखा ॥ १३ ।
क्रमेण भद्रा कविभारतीव
    लसद्विभूषा सगुणा रसाढ्या ।
सुचारुविन्यस्तपदातिहृद्या
    "विवेश मञ्चान्तरराजमार्गम्" ॥ १४ ।
तां सागराणामिव चन्द्रमूर्त्तिं
    सतृष्णमालोकयतां विलङ्घ्य ।
पयांसि वेलामिव धैर्य्यसेतुं
    समुच्छलन्ति स्म मनांसि राज्ञाम्* ॥ १५ ।

* चन्द्रमूर्त्तिं सतृष्णम् आलोकयताम् स सागराणां पयांसि वेलाम् विलङ्घ्य यथा समुच्छलन्ति तथा तां सतृष्णं विलोकयतां राज्ञां मनांसि धैर्य्यसेतुं विलङ्घ्य समुच्छलन्ति स्म ।

अनेन नेत्रेण सुदुश्चरं तपः
  कृतं पुरा, यत् नृपनन्दिनीमिमाम् ।
अवारितं पश्यति सालकानना-
  ज्ज्वलामिवोद्यानभुवं सुजातिकाम्* ॥ १६ ।
पुरा कृतं पुण्यममन्दभाग्यता
  जनातिगा वा सुभगत्वमद्य मे ।
गतो गुणानां निकषोपलोपमे
  परोक्ष्यमस्मिन् ललनाललामनि ॥ १७ ।
दृश्यामिमां नेत्रगतैकदृश्यां
  द्रष्टारमप्यद्वयसङ्गतञ्च ।
प्रकुर्व्वतो विश्वसृजो विधानं
  धिक् धिक् हहा न प्रतिभाति सम्यक् ॥ १८ ।
इत्येवमेवं परिचिन्तयत्सु
  नृपेषु सा वेत्रवती रमाख्या ।
प्राक् सन्निकर्षम् तुहिनाद्रिभर्त्तुः
  प्रापय्य तां राजसुतामवादीत् ॥ १९ ।
हिमाद्रिवासी समयं महेन
  निरन्तरं यापयता गणानाम् ।

---

* अनेन नेत्रेण पुरा सुदुश्चरं तपः कृतं, यत् यदेतम् सालकाननोज्ज्वलाम् सालकाननेन वृक्षसमूहेन उज्ज्वलाम् पक्षे अलकैश्चूर्णकुन्तलैः सह वर्त्तमानं सालकम् तादृशम् आननं मुखं तेन उज्ज्वलाम्, सुजातिका शोभना जातिः जातिपुष्पं यस्याः पक्षे शोभना विशुद्धा जातिर्जन्म यस्यास्ताम् उद्यानभुवं कुसुमकाननभूमिमिव इमां नृपनन्दिनीम् अवारितम् पश्यति ।

नाथो द्विषन्मर्दनतो नृपोयं
  द्विषन्तपो नाम यथार्थनामा ॥ २० ।

अस्त्यौषधिप्रस्थमिति प्रसिद्धं
  पुरं द्विषद्भिर्मनसाप्यधृष्यम् ।
विराजते राजसुतेऽनुगङ्गं
  सर्वाङ्गरम्यं रुचिराधिवासम् ॥ २१ ।

यत्रौषधिप्रज्वलनप्रणुन्न-
  चपातमस्कारड़तया मृगाक्षि !
कृष्णेपि पक्षे जलदोदयेपि
  ज्योत्स्नाभिरामेव विभाति राका * ॥ २२ ।

नृत्यत्सु यत्राप्सरसां गणेषु
  ददत्सु गन्धर्वगणेषु तानम् ।
विद्याधरैः सकलितोऽस्खयज्ञैः
  सगीयतेऽमुष्य यशःप्रबन्धः ॥ २३ ।

योऽनन्तरत्नप्रभवो हिमाद्रिः
  निष्कण्टकं तत्र विभुत्वमस्य ।
स्वयं यशो गुम्फति चित्ररत्नैः
  हारं मुदेऽमुष्य विनैव सूत्रम् ॥ २४ ।

विहाय शक्रो किल वैजयन्तं
  शरण्यमेनं शरणं प्रपन्ने । 402

* राका—रात्रि. ।

देत्याभियोगात् बहुशो पुलोमी*
सरचितानेन गणाधिपेन ॥ २५ ॥

धात्रा स्वयं कल्पितयज्ञभागः
देवाग्रभूतः प्रथितप्रभावः ।
कुन्दावदातोऽस्य नृपोऽन्ववाये †
दुग्धार्णवेऽभूदिव पारिजातः ॥ २६ ॥

निशम्य भर्त्तुः पितृतोऽवमानं
दाक्षायणी योगविसृष्टदेहा ।
सतो पितृत्वेन गुणैर्वरं यम्
उपागमत् शैलवरं वराङ्गि । ॥ २७ ॥

अनेन चेदिच्छसि गृह्यमाणं
पाणिं वरेण्येन गणाधिपेन ।
गौर्या तदा यौनमनन्यकाम्यं
सम्बन्धसम्मानमवाप्स्यसि त्वम् ॥ २८ ॥

पुरं प्रवेक्ष्यस्यमराङ्गनाभिः
शच्यादिभिर्याप्यभिनन्द्यमाना ।
रतिः स्वयं ते सुरुचिप्रकृष्टं
पुरा विधत्ते ‡ प्रतिकर्म § गात्रे ॥ २८ ॥

स सर्वथायोग्यसमागमोऽपि
न तन्मना बन्धुमतं बभूव ।

---

* पुलोमी—शची। † नृप—[illegible] ‡ विधत्त पुरा—[illegible]
§ प्रतिकर्म—[illegible]

सत्याः पदं चेतसि कौ निधातुं
　विना पतिं प्राक्तनमीश्वरः स्यात् * ॥ १९ ॥

प्राग्ज्योतिषाणां नृपतिं ततोऽसौ
　नीत्वा रमा तामवदत् कुमारीम् ।
रूपे यथायं गुणतस्तथैव
　पश्यालि ! सर्व्वावयवानवद्यः ॥ २० ॥

लौहित्यया नाम तरङ्गवत्या
　प्रजाः पयोभिः परिवर्द्धयन्त्या ।
मात्रेव संवेष्टितमस्त्यभीति
　प्राग्ज्योतिषं नाम पुरं विशालम् ॥ २१ ॥

तत्रास्ति कश्चित् स्फुलद्दृढसेवो
　लसन्महासेन इव त्रिनेत्रः ।
आश्चर्य्यवीर्य्यः किल चित्रसेनः
　सामर्थ्यकृत् यः सुहृदां विपाद्य † ॥ २२

चित्तेति साध्वी कमलांशभूता
　यस्यात्मजा मूर्त्तिमतीव लक्ष्मीः ।

---

* तस्याः प्राक्तनपतिं विना च पतिव्रतायाः मनसि पदं निधातुं मत्र । तथाधिप नास्ति प्राक्तनपतिं ।

† त्रिनेत्र इव शिव इव लसन्महासेन लसत् शोभमान विद्यमान इति यावत् महासेनः कार्त्तिकेयो यस्य तादृशः पक्षे लसन्ती महती सेना यस्य स तादृश इव चित्रसेन सुहृदां मध्यात् विपाद्य अपसार्य्य सामर्थ्यकृत् सामर्थ्यं करोति इति (सामर्थ्य+कृ+क्विप्) सामर्थ्यं करोति भावयति इति (सामर्थ्य+कृत्+क्विप्)। यो मित्राणां शक्तिवर्द्धन पर्य्याप्तं शक्तिसञ्चारीत्यर्थः ।

नागास्तथा भोगवतीपयोभिः
　तामेत्य सर्व्वे स्नपयाम्बभूवुः ॥ ३८ ।

प्रजाग्रतोयं विषयाश्च नाना
　जनैः समागम्य विलोक्यते सा ।
दृष्ट्वा च तां पापविमुक्तदेहैः
　जीवद्विमुक्तैरिव भूयते तैः ॥ ३९ ।

अस्याः प्रभावात् नहि यत्र दैवं
　न मानुषं वा व्यसनं कदाचित् ।
नाकालमृत्युश्चरतीतिभीति*
　नैवा प्रजाना न पराभियोगः ॥ ४० ।

तान् कामरूपान् विषयान् विशालान्
　अयं नृपः शास्ति विलीनशत्रून् ।
यथापराधं प्रणयन् दण्ड'
　प्रजाः प्रजावत् परिपाति सर्व्वाः ॥ ४१ ।

नृपे पुरोवर्त्तिनि शासति क्षितिं
　न भारतादन्यत दृढशासनं ।
कदापि दुःशासनदर्शनं, गुणे-
　ष्वनादरो वान्यनृपात् न कौरवात् ।† ॥ ४२ ।

---

* ईतिभीति —अतिवृष्ट्यादिभयम् ।

† दृढशासन पुरोवर्त्तिनि नृपे क्षितिं शासति सति भारतात् अन्यत्र तु शासन दर्शनं न, किन्तु महाभारते एव दुःशासनस्य दुर्योधनानुजस्य दर्शनं नतु दुष्टशासनस्य निन्दितराजकृतशासनस्य दर्शनम् । कौरवात् अन्यस्मात् अर्थात् धृतराष्ट्रात्

प्रजासु या चैव कथा, वदान्यता
  प्रदृश्यते सुन्दरि ! यम्यलन्तुपु ।
द्विपत्कुलाम्भोजविमर्द्दकारिणो
  यदस्य दानार्द्रकरा गजा अपि * ॥ ४३ ॥

यो नाम गोत्रोद्धरणे प्रवृत्तः †
  चकार गोत्रोद्दलनं वराहः ।
स्वगोत्रलक्ष्मीपरिवर्द्धनस्य
  कथं स देवोऽस्य दधाति साम्यम् ॥ ४४ ॥

अस्याङ्गलक्ष्मीर्भव, चेत् महेश्याः
  देव्या नु मन्थावनिदर्शनार्थम् ।
सुरासुरान् किन्नरयक्षमर्त्यान्
  समागतान् प्रेक्षितुमस्ति कामः ॥ ४५ ॥

---

अन्यत्र गुणे न अनादरोऽपि आसीत् केवलं धृतराष्ट्र एव गुणे भीमे अनादरं दर्शितवान् नतु प्रजासु क यत् गुणे गुणिना गुणग्रहणे अनादरं करोति इत्यर्थः ।

* हे सुन्दरि ! प्रजासु या एव कथा अस्य राज्ञो वनाशन्तुष्वपि वदान्यता दृश्यते, यत् यस्मात् द्विषत्कुलाम्भोजविमर्द्दकारिणो शत्रुकुलकमलोच्छेदपरा' अस्य राज्ञ गजा अपि करिणोऽपि दानार्द्रकराः दानेन सन्ततकाले जलसेचेन आर्द्रकरा सिक्तहस्ताः अथ च दानेन मदवारिणा आर्द्रशुण्डाः इत्यर्थः ।

† गोत्रोद्धरणे गोत्रायाः पृथिव्या उद्धरणे यो वराहः महावराहः गोत्रोद्दलनं गोत्राणां पर्व्वतानाम् उद्दलनम् अथच गोत्रस्य वंशस्य उद्दलनम् उच्छेदं चकार इत्थं विरुद्धव्यापारः स देवः वराहः स्वगोत्रलक्ष्मीपरिवर्द्धनस्य स्ववंशश्रीवृद्धिकारिणः अस्य राज्ञः साम्यं सादृश्यं कथं दधाति धारयति तेन सहास्य उपमा नैव भवतीत्यर्थः ।

श्रीवत्सराजाहृतमानसायाः
  सोऽस्या न भूपो रुचये बभूव ।
प्रफुल्लचूतावगृहीतचित्ता
  वृक्षान्तरं काङ्क्षति किं नु भृङ्गी ? ॥ ४६ ॥

दृक्संचया बोधितचित्तभावा
  रमावती सा नृपनन्दिनीं ताम् ।
प्रापय्य चीनाधिपसन्निधानम्
  अश्रोतुकामामपि संबभाषे ॥ ४७ ॥

अस्त्यत्र चीनाख्यमहाप्रदेशो
  विख्यायमानेन समुन्नतेन ।
दोर्वीर्य कौतूहलवर्द्धनेन
  वृतः समन्तात् वरणेन भद्रे ! ॥ ४८ ॥

विपक्षपक्षैः किल दुष्प्रवेशे
  विचित्रकाकद्रवमुख्यभूमौ ।
एकातपत्रं कुरुते प्रभुत्वम्
  अस्मिन् नृपो नोब्रति* निर्वृतोयम् ॥ ४९ ॥

समाश्रयोऽयं महसां सुवृत्तः
  कज्जखला त्वं ननु पद्मिनी च ।
तत् ते नृपस्यास्य च सङ्गमोयम्
  कल्पिष्यतेऽन्योन्यमहोत्सवाय† ॥ ५० ॥

---

* चीनाख—जनपदे देशे इत्यर्थः ।

† यथा पद्मिन्याः कमलिन्याः सूर्यस्य च तथा तेजस्विनः सुप्रभस्य चास्य राज्ञः कज्जलायाः पद्मयाख्यनायिकायास्ते सङ्गः परस्परानन्दवर्द्धनाय भविष्यतीत्यर्थः ।

तुषारपातेन विपद्यमाना
ह्यप्यन्यतोवातपतापतप्ता ।
अत्रानुरक्ता तपने महौजाः
सा पद्मिनी वास ! * निदर्शनं हि ॥ ५१ ॥
अनेन राज्ञा च गृहीतपाणि
श्चीनांशुकं तत् परिधेहि नित्यम् ।
विलासवस्तुष्वतिरम्यमेक-
मित्यन्यदेशे यदतीव काम्यम् ॥ ५२ ॥
ओष्ठाधरे नूतनपल्लवाभे
दीर्घे च नीलोत्पलनिन्दिनेत्रे ।
तिलप्रसूनप्रतिमे च नासे
विलक्षणेयं नृपभामिनीति ;
प्रतिक्षणं त्व परिवारवर्गैः
सकौतुकं सस्पृहमीक्ष्यमाणा
इयंसिकानामनदीतटस्थे
हर्म्ये सुरम्ये नय कान्तमालि । ॥ ५३,५४ ॥
प्रसाधनेऽस्याः खरभार्य्यया कृते-
प्यनादृतायाः कथमंशुके धृतिः ।
इतीयमुक्तोतमनोगता रमा
नृपान्तरं तामनयत् नृपात्मजाम् ॥ ५५
द्वीप सुमात्रेति जगत्प्रसिद्धम्
गन्धाष्टकैर्वासितसिद्धगन्धैः ।

---

* वासु !—वासि ।

रघुप्रवर्य गोत्रमनन्यकर्म्मा
  जिगाय तं गोत्रभिदं सुरेन्द्रम् ।
मितेष्वमित्रे समदृष्टिरेषः
  नूनं विजिग्ये विषमाशमोगम्* ॥ ६२ ।
इत्येवमस्या वचनं वदन्त्या
  आश्चिप्य भद्रा निजगाद नीचैः ।
मयि प्रसन्ना सखि । शैलपुत्री
  वरो ममेष्टः समुपस्थितोयम् ॥ ६३ ।
दिक्पालवर्गाः क्षितिपालवर्गाः
  सर्व्वेऽनुजानन्तु मयि प्रसन्नाः ।
अद्य वृणोमीष्टवरं महेश्या
  स्वप्ने प्रदत्तः स्तवतुष्टया यः ॥ ६४ ।
इत्युक्तवत्येव विदूरवर्त्ति-
  कदम्बमूलाभिमुखं चचाल ।
श्रीवेयमित्याकुलमानसास्तां
  उत्तस्थिवांसो ददृशुर्नृपालाः ॥ ६५
सा हर्षवेगात् न शशाक वक्तुं
  मनोगतं भावमरालकेशी ।

सुमित्रया सहसूनुना उपेत युक्त दशरथ सुमन्त्रेण तन्नाम्ना मन्त्रिणा अथ राजा सतोऽमि मन्वथाभि ईरिता कर्म्मसु अतिशयस्य साहस चयाशो रविवत् सूर्य्य इव वसूपयोगोऽपूर्षिताद्वजन्मा चयाती चययचे अर्थचयेन वसुमि किरणे धनैश्च उपचित वर्द्धित विजन्मा चन्द्र ब्राह्मणश्च येन साहस ।

* ईश —शिव मित्रे प्रसन्न अमित्रे वामे न तथेति विषमाश ।

तस्थे परं स्वेदजलार्द्रगात्री
श्रीवत्सराजाय समुन्मुखश्रीः ॥ ६६ ॥

रमा समागम्य ततः सुकेशीं
जगाद भद्रे ! नहि साम्प्रतं तत् ।
म्लानम्रवक्त्रं पितरं विधाय
यातुं प्रवृत्तासि यदेवमालि ! ॥ ६७ ॥

स्वयंवराहूतसमस्तभूपा
त्वय्यासि, नाना विदिशो दिशश्च ।
श्रीवत्सराजे परिहाय सर्वे
समागताः भूपतयस्त्वदर्थम् ॥ ६८ ॥

रूपेण जात्या वयसा च तुल्यं
तेषां कथं कामयसे न कञ्चित् ।
अज्ञातवंशादिमकिञ्चनं किं
रूपैकपक्षाश्रयिणी वृणीषे ? ॥ ६९ ॥

रूपेण कामं ह्यतिकाम एषः
शतमतो वा यदि कार्त्तिकेयः ।
किन्त्वेष गूढप्रकृतान्वयाय
नाप्यादपेतस्य युक्तं गुरूणाम् ॥ ७० ॥

जिह्रेतु कामं जनको, रुषन्तु
भूपाः, विनिन्दन्तु जनाः समस्तात् ।
अयं मदीयः पतिरित्युमा मां
समादिशत्, तत् स्वयमन्तरात्मा ॥ ७१ ॥

"दीर्घायुरथवाल्पायुः सगुणो निर्गुणोऽपि वा।
"सकृद्वृतो मया भर्त्ता न द्वितीयं वृणोम्यहम्॥" ७२।

तथैवमुक्ते वदु मानिनी सा
रम्भावती नाम जगाद धीरा।
ज्योतत्मराजो जगदेकमान्यो
भ्रमत्यरण्ये वनतापसः सन्॥ ७३।

इयं प्रवृत्तिर्जनताव्यपारिणी
पदे पदे सञ्चरति प्रमर्षिणी।
वयं सुरूपौ नृपलक्षणान्वितौ
न स क्षितीशः कथमालि! बुध्यते?॥ ७४।

तथैवमुक्ते सहसा विदारयन्
नभस्तलं राजगणैरुदीरितः।
विनिर्जिताम्भोधरघोरगर्जितो
ध्वनिः सहासः श्रुतिगोचरोऽभवत्॥ ७५।

यदि त्वया रे कुलपांशुले! वरः
स्वयंवरेऽस्मिन् वरणीय एष चेत्?
विमाननार्थं वद किं तदा नृपैः
अमीभिराहूतसमागतैरिह?॥ ७६।

अमुष्य कौमारहरं समाह्वयन्
अजिग्रहत् भूपतिरेष बाहुकः।
कथं न कन्याम्, कथमीदृशीश्च तां
करोति लोकेष्वखिलेषु कीर्तिताम्॥ ७७।

न चेदियं गूढ़निबद्धभावा
जटाधरेऽस्मिन् कथमन्यथाऽसौ।
दृष्ट्वैव मत्तेव विहाय सर्व्वान्
सम्भावयेत् सम्बरणस्रजैनम्॥ ७८।

विण्मूत्रकुण्डे पतिताहुतिर्येत्
प्रवातनुन्ना ज्वलितेऽपि वह्नौ।
तदीपसोयेत नृपात्मजेयं
लग्नाऽधमेऽस्मिन् सति राजवर्गे॥ ७९।

तत् लेढु चान्यः परमान्नमेतत्
ग्राम्यो मृगो दूषक एष तावत्।
तथा कृतेऽस्माभिरनुष्ठित तत्
कर्म्मातिधर्म्मं भविता नृपालाः॥ ८०।

निगूढ़पापाचरणात् वधार्हः
रूपेण मत्तः कुलधर्म्मवर्म्मा।
द्राक् कन्यकान्तःपुरदूषकोऽयम्
आनीयतां वध्यभुवं निबध्य॥ ८१।

इति विसदृशयोगोत्पन्नमासाद्य कोपं
स च नरपतिवर्गैर्युद्धुमेऽस्तः प्रकामम्।
प्रतिदिशमथ सर्व्वैः सैन्यमालोक्य भद्रा-
पतिमतिभरदत्तशौर्यविक्रम्य चचाल॥ ८२।

इति शोर्य्यीवत्चरिते महाकाव्ये भद्रास्वयंवरो नाम
अष्टादशः सर्गः।

## ऊनविंशः सर्गः ।

अथ कश्चिदुपेत्य पूरुषः
प्रतिभावान् प्रहितो नराधिपैः ।
नृपतिं खलु बद्धसंकथं
प्रियया सार्धमुदाहरत् वचः ॥ १ ।

अपसारितयोधका रणे
शरणं यान्ति भयादरातयः ।
यमिहाद्रिपतेः पतिं गणा-
धिपमाकर्ण्य तस्य शासनम् ॥ २ ।

"त्वयि गूढनिबद्धरागया
नृपपुत्र्या नृपतीन् विहाय नः
त्वमसि प्रतिषिद्धयापि यत्
पतिभावेन वृतः स्वयंवरे ;
न पदं खलु तेन नः क्रुधां
त्वमसि, त्वं नच वाच्यतां गतः,
यदियं ननु जानता त्वया
न निषिद्धा कुलटा स्वयंवरात् ॥ ३, ४ ।

अमुना ननु कर्मणा भवान्
महदागः कृतवान् न संशयः ।
महितो महतां स बाहुको
वहते यत् त्रपयानतं शिरः ॥ ५ ।

वयमप्यतिकष्टमागताः
असहं तत्तदहो निरर्थकम् ।
तदिदं कथमन्यदुष्करं
तव पापं समुपेक्ष्यतेऽञ्जसा ॥ ६ ।

यदनं विनसं विकर्णकं
तव कृत्वा व्यपरोप्य मूर्द्धजान् ।
करणीयमिदं प्रशासनं
सदृशं चेतदहो त्वदागसः" ॥ ७ ।

स्वयमेतु गणाधिपान्तिकं
ननु यावत् बहुभिः पदातिभिः ।
तरसा सुदृढं नियन्त्रितः
सविधे तस्य न नीयते भवान् ॥ ८ ।

प्रतिनिर्गममार्गमस्तिणो
यदपक्रान्तिनिरोधनाय ते ।
ननु जाग्रति तत् पलायनं
नगरात् सौतिपुरात् सुदुष्करम् ॥ ९ ।

तव मर्त्तनिवासिनः सतः
सुरलोकेपि सुदुर्लभं वपुः ।
रत तस्य कथं क्रियेदृशो
विषमाऽदृष्टचरो जुगुप्सिता ॥ १० ।

रुचिरा ननु यत्र चाकृतिः
गुणराशिर्नियमेन तत्र वै ।

इति सुक्रमहो चिरन्तनं
विपरीतं त्वयि दृश्यतेऽधुना ॥ ११ ॥
अतिनीचकुलात् समुद्भव-
वत वैषम्यमिदं व्यजीजनत् ।
इति चानुमिति प्रबाधते
सगुणं कर्दमजातमम्बुजम् ॥ १२ ॥
प्रणतानवता महात्मना
प्रणिपातः प्रशमाय कुप्यताम् * ।
इति विश्वसता त्वया पदं
स्वगतास्य क्रियतां मम क्षुधाम् ॥ १३ ॥
तदलं परिहृदये रुषा
गणनाथस्य विलङ्घ्य शासनम् ।
अपराधनमेकमम्बुभि
प्रविमार्ष्टुं सुकरं न तद्द्वयम् † ॥ १४ ॥
विनते शिरसि प्रमोदता
गणभर्त्तुर्नयनाम्बु हार्द्दजम् ।
ननु तत्र समुन्नते स्वयात्
निपतत्येव रुषासिपुत्रिका ॥ १५ ॥
इति गामभिधाय विद्विष
प्रणिधिं जोषमवस्थित सती ।

---

* प्रणतान् अवतां कुप्यतां महात्मनां प्रणिपातः प्रशमाय इति विश्वसता त्वया पदं स्वगता अस्य गणनाथस्य क्षुधा मम क्रियताम् ।

† अपराधद्वयम् ।

रमणेन निवारितापि सा
 चलितैकभ्रु, जगाद भामिनी ॥ १६ ॥
प्रतिवाचमयं न दास्यते
 अपमानाय गणाधिपाय ते ।
ननु जम्बुक एव जम्बुक-
 ध्वनिमाकर्ण्य विरौति, नो हरिः ॥ १७ ॥
अतिसर्व्वमिमं गुणेरहं
 ह्रतवत्यस्मि वरार्थिनो यदि ।
कथमत्र गणाधिपस्य ते
 गुरुरीदृक् वद मत्सरोऽजनि ? ॥ १८ ॥
ज्वलने यदि मन्त्रसत्कृता
 पतिता स्यात् विमला घृताहुतिः ।
पतनाय तथाविधस्थले
 ननु तस्या* वद को ह्यसूयति ? ॥ १९ ॥
किमयं नु गणाधिपाय ते
 गुरुणा मां प्रतिपादिता तदा ।
हरति स्म बलात् मदायनः
 मम पत्ये ननु तेन सोऽक्रुधत् ? ॥ २० ॥
कुपितस्य पतिं प्रणामितुं
 यदि यत् मोचयसे ममेच्छया ।
ननु तव निदानमथवा
 समनो हरितस्तो निरङ्कुशा ? ॥ २१ ॥

* तस्या—इत्यादि ।

परिणीतवतीं सुकेतुना
  ननु गन्धर्व्वसुतेन सोदराम् ।
हरतो दनुजाधिपस्य किं
  कृतवान् शासनमेष दुर्मदः ?* ॥ २२ ॥

सति यो निजदूषणेऽक्षमः
  प्रतिकर्त्तुं, परदूषणेऽसति ।
प्रतिकारपरः, स कस्य वा
  नहि गच्छत्युपहास्यतां जड़ः ॥ २३ ॥

स हि को मम वल्लभस्य वा
  वद शास्तिप्रतिपादने प्रभुः ।
स च मे न सहोदरः, पिता
  नच तं तत्करणे न्ययूयुजत् ॥ २४ ॥

न सती परपूरुषं स्पृशेत्
  इति तस्याङ्ग ! भवाय, चान्यथा ।
कुलटां वदतोऽस्य मामिदं
  चरणं मूर्द्धनि पातितं भवेत् ॥ २५ ॥

यदि चात्महितं स वाञ्छति
  प्रतियातु स्वगृहाननाहतः ।

---

* गणाधिपस्य सोदरा प्राक् सुकेतुना नाम गन्धर्व्वसुतेन परिणीता, तां रणजिन्नामा दनुजाधिपः तां बलात् जहार, एष दुर्मद तस्य किं शासनं कृतवान् ? स्वभागिनीधर्षणम् प्रतिकर्त्तुमसमर्थस्य परदूषणं प्रतिकर्त्तुकामस्य कथं नाम न लज्जा ? कथं वा धीकधिकृतजीवितधारणम् ।

यदि चैति स कालनोदितो
  वपुरध्येष्यति तत् कबन्धताम् ॥ २६ ।
सुखशायनिका* पुलोमजा
  अरभार्य्या रतिरस्य किंकरी ।
इति मां न्यगदत् स्वयंवरे
  सविधे तस्य गतां रमावती ॥ २७ ।
स शचीमथवा स्मरप्रियां
  गणनाथः समुपेत्य पृच्छतु ।
कुलटाहमथान्यथेति सा
  सकलं वेत्ति, निवेदयिष्यति ॥ २८ ।
यमियं नृपनन्दिनी वरं
  वरमाल्येन समर्चयत् स्वयम् ।
स हि कः ? स च कोऽह्यो, गणा-
  धिपमत्येति गुणैर्नवा स हि ॥ २९ ।
इति सर्व्वमसौ रतेर्मुखात्
  सविशेषं परिभोत्स्यते† भुवन् ।
कुलटां वदतोऽस्य तर्हि मा-
  मनुतापो हृदयं नु तप्स्यति ॥ ३० ।
अनभिज्ञतया यदभ्यधात्
  स हि पापः कुलटेति मां मुधा ।

---

* या सुखशयनम् इच्छति। पुलोमजा इन्द्राणी यस्य सुखशायनिका, अस्य परिचारिका इत्यर्थः।

† परिभोत्स्यते—ग्रासति, भुज्+लृट्+कर्त्ते।

नहि तेन समाश्रयः, कदा
　किमु रत्नं वचनात् विनिन्द्यते ? ॥ २१ ।
ननु यत्र कुले हिमालयो
　धृतजन्मा कथमोषधस्तत: ?
अथवा यत एव पङ्कजं
　नहि किं शैवल एव तद्भवः ? ॥ २२ ।
हिमवान् गिरिरस्य गोत्रभू-
　रिति नैवार्हति पूज्यतामयम् ।
किमु शूकरमाधमर्धते
　हरिराप्नोत् ननु कोल* इत्यत: ? ॥ २३ ।
अयमेव मदीयवल्लभो
　गणपं तं न तृणाय मन्यते ।
नहि तद्वचनात् महायशो
　नरसिंहः सविधे गमिष्यति ॥ २४ ।
यदि शक्तिरसौ गणाधिपः
　किमिति द्राक् समराय मत्पतिम् ।
न समाह्वयते ? तथा कृते
　हृतभूतं भवितास्य दोर्बलम् ॥ २५ ।
यदि चैनमुपेत्य मन्दिरं
　तरसा निगृमयं विघेष्टते,
गतिमाप्स्यति नहि दुर्मदो
　ननु पापो बलयोऽधिदुर्गत: ;

* कोल —शूकर ।

ननु पश्यतु योषितां भुजे
बलवीर्य्यं कियदस्ति दुर्मदः ॥ ४२ ।
निशमय्य रुषा तयेरिता-
मिति वाचं श्रुतिकर्कशां ततः ।
प्रतिघेन* वचोहरो† भृशं
विचकम्पे चकमे च भाषितुम् ॥ ४३ ।
नृपतिः स्फुरितोत्तराधरं
पुनरेनां खलु वक्तुमुद्यतम् ।
प्रतिषिध्य वचोहरं वचः
प्रशमालंकृतमित्यमब्रवीत् ॥ ४४ ।
अयि ! किं फलमेव वाक्ययैः
उभयोस्तैः प्रतिवादिवादिनोः ।
परमेव विदीर्य्यते स्वरः
परकर्णौ जनितज्वरः परम् ॥ ४५ ।
तदतः परमेव भाषणात्
विरतिस्ते मतिमन् ! शुभप्रदा ।
विनिहत्य यटेर्गणाधिपं
नहि भद्रापतिरागमिष्यति ॥ ४६ ।
ननु तादृगदण्डमुत्कटं
न कृतागा यमुपैति स्वयम् ।
यदपक्रमणं हलात् बलात्
प्रकृतिः सा हि जनस्य तादृशः ॥ ४७ ।

* प्रतिघेन—क्रोधेन । † वचोहरः—दूतः ।

इति मद्वचनात् प्रकोपितः
स दिधीर्षुस्तरसा यथा च माम् ।
प्रहिणोति न किंकरान् तथा
कुरु यत्नात् ननु भद्र ! सर्व्वथा ॥ ४८ ।

चतुरङ्गबलान्वितो नृपः
मम शास्त्यै समुपैतु वा स्वयम् ।
अथवा समराय वीरवत्
स हि मामाह्वयतां रणाङ्गने ॥ ४९ ।

प्रथमं यदवोचत प्रिया
तदहं ते स्मरणार्थमभ्यधाम् ।
दृढ़ताप्रतिपादनाय मे
दयितोक्तेर्वचनं निबोध तत् ॥ ५० ।

इति स प्रणिधिर्नृपोक्तिभिः
प्रमपृक्ताभिरपि प्रचुक्षुभे ।
समिधा हि घृताक्तयानलः
प्रथमं नैति परं विवर्द्धते ॥ ५१ ।

इति तं कृतभर्त्सनोऽवदत्
छ्लतदेवेन विमोहितोऽसि यत् ।
अहहाभिनिविष्टमानसो
ननु तेनैवमसि त्वमीदृशः ॥ ५२ ।

प्रतिकूलविधिर्हिताथिने
प्रियमित्राय जनो नु कुप्यति ।

श्रुतिरम्बुगतं पयो यथा
स्थितमुद्वेजयते वचश्च तम् ॥ ५३ ।
मलिनात्मक एव कश्मलं *
कुरुते कार्य्यमतोऽवगर्हितम्
घन आहृतमित्रमण्डलो
मलिनात्मात्र न किं निदर्शनम् ?
रविणायमहो चितेस्तलात्
रसमाकृष्य करैर्विनिर्म्मितः
गगनाध्ययसुन्नते पदम्
ननु नीतश्च घनो जडात्मकः ॥ ५४, ५५ ।
लभतेऽवसरं यदा रदो
दशति द्राक् रसनां तदा भृशम्
रसना तु रदस्य यातनां
यतते वारयितुं प्रतिक्षणम् ;
उपकारपरः परस्य यः
कुरुते स व्रतपालनं सदा,
अपकारमहो परैः कृतं
न कदा गणयत्यसौ व्रती ॥ ५६, ५७ । युग्मकम् ।
अयमुपविषो महोरगो
स जनम्याल दशं नु मा स्पृश ।
उपदेशमिम दयापरः
प्रददत्यम्बुजनाभ माधवः ॥ ५८ ।

* कश्मलं—पापम्।

तदधीनमथो विवेकिनाम्
उपदेशश्रवणं यथामति ।
अवहेलनमस्य वा, तथा
प्रतिबुध्यस्व विबोधितो मया ॥ ५६ ॥

इति गणपतिदूतः चौधिनाथं प्रबोध्य
द्रुतपदमगमत् स्वस्वामिनः पादमूलम् ।
इदमिति गणनाथं भावयन् धीरचित्तः
स खलु कुसुमलावो-गेहमागात् सकान्तः* ॥ ६० ॥

इति श्रीश्रीवत्सचरिते महाकाव्ये भद्रागणदूतसंवादो
नाम ऊनविंशः सर्गः ।

---

* सकान्तः—भद्रया सहितः ।

## विंशतितमः सर्गः ।

आश्वास्यमानां परिचारिकाभी
राज्ञीं सुताशोकविपण्णचित्ताम् ।
रहा निषण्णां समुपेत्य राजा
स वाहुको वाक्यमिदं बभाषे ॥ १ ।

अलं विषादेन, विमुञ्च भूमिं,
मोदस्व जामातृजयेन देवि !
वत्सोऽसहायो नृपचक्रमाजौ
खड्गद्वितीयो निखिलं विजिग्ये ॥ २ ।

विपक्षपक्षाः प्रबला निकामं
भुजैकपक्षो दुहितुः पतिस्तत् ।
अनिष्टमाशङ्क्य शमं विधित्सुः
गतो रणक्षेत्रमहं सवर्ग्यः ॥ ३ ।

नदत्सु तूर्येषु निषेधवाक्यं
न कस्य यातं श्रुतिमार्गमुच्चैः ।
तिरोदधत्यक्षिपथं प्रगाढे
रजोन्धकारे न च कोपि दृष्टः ॥ ४

क्षणं विदूरे विकलेन्द्रियः सन्
कर्त्तव्यमूढः स्थितवान् सशङ्कः ।
स सैन्यघोषः सहसा शशाम
द्राक् नीरजा भूरुधिरप्रवाहैः ॥ ५ ।

न धर्म्मोऽस्मैतत् प्रधनं यदेकं
योधा असंख्या अभियुञ्जते द्राक्,
ब्रुवाण इत्थेवमपि प्रमुक्त-
कण्ठं तदा द्रष्टृजने समन्तात् ;
प्रणोदिता वीरवर ! * त्वयैव
भूपा अमी चात्मपास्य धर्मम्,
आक्रान्तवन्तो युगपत् प्रहृत्य
मां वत्सपाशाः† समरेऽसहायम् ॥१७, १८।

कण्ठे मदीये वरमाल्यदाने
कृते तया, त्वं करतालमुच्चैः।
दत्त्वा विमूढ ! व्यहसोः प्रकामं
वदन् मुहुस्तां कुलटेति साध्वीम् ॥ १९।

इयं चितियैत् नरशोणितेन
संप्लाविता दुष्ट ! विदूषिता च।
मूलं नु तत्रापरवृद्धिदृष्टौ
महीयसी मत्सरिता तवैव ॥ २०।

नृपात्मजा सा कुलटा त्वगाची
प्रभुर्भवद्बन्धनमोचनाय।
तत् तत्समीपे भवतैवमेवं-
दर्पेण गन्तव्यमलं वदित्वा ॥ २१।

---

* सोल्लुण्ठं वचनमेतत्, हे कापुरुष इत्यर्थः।

† वत्सपाशा—कुत्सिताः वत्साः (कुत्सायां पाश)।

स्कन्देऽप्यसम्भाव्यमिदञ्च * रामे †
न सम्भवत्येव मुनौ कथञ्चित्॥ ११।

प्राद्रुद्रवत् चीनपतिर्भयेन
विमुक्तशस्त्रो हृतसर्व्वसैन्यः।
मृतोऽथवा प्रद्रुतवान् न जाने
स कामरूपाधिपतिः सवर्म्यः॥ १२।

खड्गप्रहारेण विलूनगात्रो
व्यपेतमौलिः प्रणिपत्य वत्सम्।
क्षतस्खलद्रक्तवपुः सुमात्रा-
पतिर्ययाचे गमनं स्वदेशे॥ १३।

प्राग्ज्योतिषाणामधिपस्य मुच्चं
शिरस्यजिघ्रत् प्रणतं जटाधृत्।
ततः समुत्थाप्य विचुम्बितास्यं
गाढं समालिङ्गितवान् सहर्षः॥ १४।

द्विपन्तपं नाम गणाधिनाथं
मौर्व्व्या दृढं यन्त्रितहस्तपादम्।
प्रसादयन्तं खलु मोचनाय
सहासमेवं निजगाद वत्सः॥ १५।

किं शासनं ते भवितानुरूपं
स्वयं विचार्य्याशु निरूपय त्वम्।
मां कर्त्तुमिच्छा ननु विप्रवक्त्रम् ‡
शक्त्यानया ते भवति स्म मूढ़!॥ १६।

---

* स्कन्दे—कार्त्तिकेये। † रामे—परशुरामे। ‡ विप्रवक्त्रम्—नासिकाशून्यमुखम्।

न धर्मोऽयमेतत् प्रधनं यदेकं
योधा असंख्या अभियुञ्जते द्राक्,
ब्रुवाण इत्येवमपि प्रमुक्त-
कण्ठे तदा द्रष्टृजने समन्तात् ;
प्रणोदिता वीरवर ! * त्वयैव
भूपा अमी चात्तमपास्य धर्मम्,
आक्रान्तवन्तो युगपत् प्रहृत्या
मां चक्षपायाः† समरेऽसहायम् ॥१७, १८ ।

कण्ठे मदीये वरमाल्यदाने
कृते तया, त्वं करतालशब्दैः।
दत्त्वा विमूढ़ ! व्यहसोः प्रकामं
वदन् मुहुस्तां कुलटेति साध्वीम् ॥ १९ ।

इयं चितियित् नरशोणितेन
संप्लाविता दुष्ट ! विदूषिता च ।
मूलं नु तत्रापरहृद्दिष्टी
महीयसी मत्सरिता तवैव ॥ २० ।

नृपात्मजा सा कुलटा सगाची
प्रभुर्मयद्बन्धनमोचनाय ।
तत् तत्समीपे भवतैवमेवं
दर्पेन गन्तव्यमलं वदित्वा ॥ २१ ।

---

* श्रीकृष्णं वचनमिदम्, हे वासुदेव इत्यर्थः ।

† अपशयाः—कुण्ठिताः, यथाः ( कुण्ठधारा पाश )।

सा राजबाला परिमूढचित्तं
　विबोधयिष्यत्यपयातदुःखा।
कस्याङ्कलक्ष्मीरभवत् नताङ्गी
　कथं परिज्ञानमिति स्फुटं त्वाम्* ॥ २२ ।
इत्येवमुक्तः स† च कातराक्षं
　मामैक्षत द्राक् परिवर्त्य वक्त्रम्।
उन्नीतभावोऽहमनेन तस्य
　वत्सान्तिकं सत्वरमभ्यगच्छम् ॥ २३ ।
अवोचमेनं गणपो विमुच्यतां
　विमाननामीदृशमेष‡ नार्हति।
क्षमा हि शक्तौ विनतेऽहिते नु यत्
　तदेव वीरत्वविशेषबोधकम् ॥ २४ ।
मयैवमुक्तो वचसः सदुत्तरं
　प्रदाय वत्सः क्रियया झटित्यसौ।
प्रणम्य मां भावविहीनमम्बुधिम्
　ययौ समुद्दिश्य मृगेन्द्रविक्रमः ॥ २५
प्राग्ज्योतिषाणामधिपस्य पुत्र-
　स्तत्संज्ञया तं द्रुतमन्वगच्छत्।
गणाधिपेनाहमपूर्णकामः
　ततस्त्वयोषे रुचिभिर्निहतः ॥ २६ ।

---

* सा कस्य कण्ठे वरमाल्यं दत्तवती, यस्य कण्ठे वरमाल्यं दत्तवती तस्य स्वरूपं कथं सा ज्ञातवती, तत् सर्वं सा त्वां स्फुटं बोधयिष्यति।

† सः—गणपः।　　　　‡ ईदृशम्—ईदृशीम्।

निशम्य भर्त्तुर्वचनं सहर्षा
राज्ञी नियम्य श्लथकेशजालम् ।
बद्धोपचाराञ्जलिमश्रुदिग्धा
इत्थं प्रियास्ये चिपती बभाषे ॥ २७ ।

वत्सो न ते यत् श्वशुरार्हपूजां
चक्रे, न तत्रास्य मदो निदानम् ।
तवैव तस्मिन्नवधीरणं तत्
तटस्थमेनं कृतवत् निबोध ॥ २८ ।

अन्ये नृपा मत्सरिणो यदूत्तु-
स्तदेव विश्वस्य भवान् न तस्य ।
तत्त्वावधानं कृतवान् सरोषः
तेनायमेवं कलुषान्तरात्मा ॥ २९ ।

अमानिता* बन्धुजनस्य नाथ !
विक्षुब्धचित्तं कुरुते हि बन्धुम् ।
सपर्य्यया तत् परिपूज्य वत्सं
प्रवेशयाद्यैव गृहं दुहित्रा ॥ ३० ।

श्रीवत्सराजः शनिपीड़नेन
भार्य्यासमेतो मुनिवेशधारी
वने वने पर्य्यटतीति वार्त्ता
रमामुखात् शुश्रुवुषी† सुता मे ;

* समायम् इत्येतत्समानार्थम् ।

† शुश्रुवुषी — श्रुतवती, श्रु + क्वसु, स्त्रीत्वात् ईप् ।

मुमूर्च्छ, मूर्च्छापगमे च रम्भा
तामित्यमाश्वासयदेत्य बालाम्,
अलं विषादेन, न मैत्रपुत्रा
वचोऽन्यथा स्यात्, भव पुत्रि ! धीरा ॥२१,२२।
कश्चित् मदीये सदने महात्मा
विचित्रशक्तिश्छलतापसः सन् ।
समेत्य वासं कुरुते कियन्ति
दिनानि वत्से ! सुनिगूढवासम् ॥ २३ ।
तस्मिन् समस्तं नृपचक्रवर्त्ति-
चिह्नं स्फुटं रूपमलौकिकञ्च ।
निगूहते यद्यपि चात्मरूपम्
तथाप्यसौ स क्षितिपो न शङ्का* ॥ २४ ।
श्रीवत्सराजे किल बद्धभावा
तस्य ह्यनुद्वेगकथां निशम्य
भद्रा हताशा मरणोद्यताभूत्
इत्येवमाकर्ण्य स† शङ्कमानः ;
स प्रेषयामास भवत्सकाशं
त्वामेवमाह स्म च सम्मुनेन,
अविप्लुतादि वचनं नु देव्याः
कर्त्तुं स पूजा समयेऽवतीर्णः ;
अस्यवपि द्राक् गिरिजाप्रभावात्
त्वां पूर्णकामां हि पुरा विधत्ते,

---

* न शङ्का—न सन्देहः ।    † स—[illegible] ।

तच्चिन्तयालं नृपपुत्रि ! धैर्यम्
आधेहि, धीरा गमयस्व कालम् ॥ ३५-३७ ।
इत्येवमाकर्ण्य मुनेर्निदेशं
रम्भामुखात् सा स्थिरतामगच्छत् ।
चोवैव यत् सा सहसा कदम्ब-
मूलं गता तत्र निदानमेतत् ॥ ३८ ।
भृङ्गीस्वरूपं प्रतिपद्य गौरी
कदम्बमूले तव पुत्रि ! भर्त्ता ।
अमुं वृणीष्वेति जुगुञ्ज कर्णे
श्रुत्वैव बाला नृपतीनहासीत् ॥ ३९ ।
निषिध्यमानाप्यनिरुद्धवेगा
नदीव निम्नाभिमुखी वहन्ती ।
ववार त छद्ममुनिं पतित्वे
नृपाय सार्द्ध जहसुः समस्ताः ॥ ४० ।
पित्रा न दत्तेति सुता मदीया
वत्सोऽस्पृशन् धर्मपरायणोऽयम् ।
एतानि दिनानि तया सहोग्रम्
"धन्यस्ततीव व्रतमासिधारम्" ॥ ४१ ।
न नन्दने नापि कुबेरकानने
प्रजायतेऽस्या विषवल्लिरुत्कटा ।
इति स्थिरात्मा तनयागतां स्वयं
सहोद्धि जामातरमामय द्रुतम् ॥ ४२ ।

सद्भर्त्तृसङ्गमुदितामभिनन्द्य कार्य्यां
वत्सां प्रियेण सहितां भवनं नयामि ।
इत्थं नृपः प्रियतमां परिसान्त्वयंस्तां
निर्य्याय वासभवनात् सद आससाद ॥ ४२ ॥

इति श्रीश्रीवत्सचरिते महाकाव्ये वाहुकतत्पत्नी-
संवादो नाम विंशः सर्गः ।

---

सद्भर्तृसङ्गमुदितामभिनन्द्यकार्थ्यां
वत्सां प्रियेण सहितां भवनं नयामि ।
इत्थं नृपः प्रियतमां परिसान्त्वयंस्तां
निर्याय वासभवनात् सद आससाद ॥ ४२ ।

इति श्रीश्रीवत्सचरिते महाकाव्ये वाहुकतत्पत्नी-
संवादो नाम विंशः सर्गः ।



आश्चर्य्यमेतदरिपुंगदवानलस्य
राज्ञोऽस्य कश्चिदपरश्च रणादि काले ।
एतावता न समयेन यदुग्रधारं
तं चन्द्रहासमवलोकयति स्म लोकः ॥ ११ ॥

तत् कामरूपविषयाधिपतिः सुमाया-
नाथस्य भाषितमथो ह्यनुमोदते स्म ।
यद्येष राजकवले न स सैंहिकेयः*
किं चित्रसेनतनयं स तदाभ्यनन्दत् ? ॥ १२ ॥

या चित्रसेनतनया जगति प्रसिद्धा
चित्रेति तामचिरतश्चर एष राजा ।
जग्राह धर्मचरणाय कलत्रभावे
स्वश्यालकं तदयमद्य निनाय वासम् ॥ १३ ॥

आकर्ण्य तत् श्रुतिसुखं वचनं सबाष्पः
प्रोवाच फुल्लवदनो गलदश्रुबिन्दुः ।
दिष्ट्या प्रियद्रुमलतया सहकारयोगः
प्राप्तस्तदा रुचिकरो वनभूतयेऽद्य ॥ १४ ॥

धन्यासि राज्ञि! तव गर्भसुधाम्बुधौ यत्
ईदृक् स्थिरप्रकृतिका कमलाऽजनिष्ट ।
या निर्जरेषु निखिलेष्वपि सत्सु वामा
दुर्वीरदर्पमपि विष्णुमवाप कामम् ॥ १५ ॥

---

* [illegible]

खड्गोऽपि तस्य ननु नन्दक एव नान्यो
यस्मिन् विशुद्धमुकुरप्रतिमेऽप्रमेये ।
संक्रान्तविम्वमवलोक्य रिपुः स्वदेहं
द्राक् शिक्षते रणपराङ्मुखतोपदेशम् ॥ ६ ।

आकर्ण्य वाक्यमिति तस्य हसन् सुमाला-
नाथोऽवदत् नरपतिं विनयावनम्रः ।
मानी विजेतरि समर्थयतेऽरिपक्षे
दैवानुकूल्यमपवारयितुं स्वदोषम्* ॥ ७ ।

तेन द्विपक्षप इति प्रलपन् स्वदोषं
निह्नोतुमिच्छति न तत् नृप ! रोचते मे ।
जामातरं तव समर्थयते मनो मे
श्रीवत्सराजमतिसर्व्वबलं वरेण्यम् ॥ ८ ।

तस्याद्य सौरिपरिपीड़नपीड़ितस्य
कान्तानुगस्य मुनिवेशतिरोहितस्य ।
कान्तारमावसत एव गताः कियन्तः
सवत्सरा नरपतेरतिदुर्गतस्य ॥ ९ ।

तस्येदृशो नृपवरस्य हरिप्रदत्तः
खड्गोऽस्ति, यत्र करसकलितेऽरिपक्षाः ।
भग्नोद्यमाः करतलस्खलदायुधाः द्राक्
दूरं प्रयान्ति समरात् भयविह्वलाङ्गाः ॥ १० ।

* अथ दैवबलेन बली, अस्य पुरतः के वयम् इत्येव समर्थनं विना मानिनः पराक्रमाभावसूचनम् अवमाननम् न धारयन्ति सोढुम् इत्यत आह. तस्मिन् स्वदोषं दैवानुकूल्यं समर्थयते ।

भद्रं त्वया कृतमभूत् तनये ! नु भद्रे !
  *आबोधजन्म नियताखलितोपचारा ।
आराधनं सुकठिनं हरवल्लभायाः
  यत् त्वं शिरीषमृदुलापि चकर्थ तादृक् ॥ १६ ।
एतादृशेन तपसा च विना कथञ्चित्
  तादृक् पति र्न सुलभस्तव तत् विनागः† ।
यत् ते विमाननमकार्षमबोधपूर्व्वं
  तत् पुत्रि ! तातकृतमित्यद एव सह्यम् ॥ १७ ।
पूर्णं मनोरथमिमं स्वचिरात् नृपेन्द्राः
  किं नाभिनन्दितुमहो त्वरते जनोऽयम्‡ ।
आगच्छताशु मिलिता परिलम्भयेम
  तं तत्समा वयममुं प्रतिपत्तिमद्य ¶ ॥ १८ ।
इत्येवमश्रुकलुषेक्षणयुग्ममुक्त-
  वत्येव राजनि सभास्थसमस्तलोकः ।
राज्ञो वचोऽनुममुदे च नभःप्रमाथी
  घोरश्च कर्णविवरं गत आर्त्तनादः ॥ १९ ।
कस्यार्त्तनाद इति तन्निनदानुसारि
  नेत्रं प्रसार्य्य च विलोकयितुं प्रवृत्तः ।
साश्चर्य्यमैक्षत सदस्यगणः कमेकम्
  आकृष्यमाणमपरैः पुरुषं निबध्य ॥ २० ।

---

* अत्र दूराह्वाने न सन्धिः । † आगः अपराधः, विनागः विनापराधम् ।
‡ अयं जनः —मद्विधो जन अहमित्यर्थः ।
¶ तमम् श्रीवत्सं तत्समाः श्रीवत्सानुरूपां प्रतिपत्तिं गौरवं सम्प्रति प्रापयाम अद्य आगच्छत यूयम् ।

स्वर्णेष्टकाभिरमलद्युतिभिर्विचित्र-
  निर्म्माणसौष्ठवमनोहरदर्शनाभिः
पूर्णे च किङ्करजनैः परिवाह्यमाने
  पात्रे पुरः चितितले निहिते प्रशस्ते ;
प्राग्ज्योतिषेश्वरसुतेन च दर्शिताध्वा
  भास्वानिवारुणपुरःसरतामुपेतः ।
काषायवस्त्रयुगलं स मुनिर्वसानो
  द्राक् सभ्यचञ्चलदृशां विषयीबभूव ॥ २१,२२ ।

तं वीच्य सम्मुखगतं स हि सार्थवाहो
  राजन्ननेन मुषितोस्मि नराधमेन ।
विद्वानमुं कपटतापसवेशगूढ़ं
  दण्डं करोतु ननु शासनमस्य देवः ॥ २३ ।

इत्थं प्रकुर्व्वति च तत्र नृपाभियोगं
  श्रीवत्सभूपतिरनाकुलचित्तवृत्तिः ।
सम्बोधयन् नृपवरं परिदर्शनार्थं
  प्रत्यर्थिवत् विनयनम्रगिरा अवोचत् ॥ २४ ।

धर्म्मावतार ! ननु देव कृपानिधान !
  पापोयमम्बुधिजले सहसा चिपन् माम् ।
स्वर्णेष्टकाः प्रलुषितस्तया मदीयाः
  स्वस्वामितामगमयत् प्रविमुक्तगर्व्वः ॥ २५ ।

मत्कान्तयास्य तरणी पदपङ्कजेन
  स्पृष्टा गतिं द्रुततरामगमत् निवृत्ता ।

गच्छेत् कदाचिदियमीदृशमप्यवस्थाम्
इत्येष तामगणयत् परिचारिकासु ॥ २६ ।

आकर्ण्य तत् वचनमस्य मुनेः स साधुः
कृत्वाट्टहासमवदत् शृणु देव सर्व्वम् ।
श्रीवत्सराजवनिता हरमोहिनीव
दत्तात्मजा वसति मे नृप ! पोतमध्ये ॥ २७ ।

सा पूज्यते प्रतिदिनं परया च भक्त्या
देवीव देव ! जननीव मया यथावत् ।
श्रीरत्नदृष्टिरपरा परिचारिकासु
सा गण्यते ननु मयेति मुधा प्रलापः ॥ २८ ।

स्वर्णेष्टका मम बलात् परिलुण्ठतो द्राक्
श्रीवत्सराजदयितामभिलष्यतश्च ।
अद्यापि किं वपुरिदं न कवन्धभावं
प्राप्नोति दुष्टचरितस्य नृपाद्भयास्य ॥ २९ ।

यद्यस्य सा युवतिरत्नमयं तदास्याः
कीदृक् स्वरूपमनुवर्ण्य वदत्वनार्य्यः ।
इत्येवमस्य वचनं निशमय्य साधु
साधूक्तमाकलय तापस ! तत्स्वरूपम् ॥ ३० ।

वाक्यं समीरितमिदं गणपेन तेन
प्रत्यर्थितामुपगतोऽपि निशम्य राजा ।
किञ्चित् तदुत्तरमयं न ददौ, निकामं
पक्षं विवर्त्त्य परिभूत इवायतस्थे ॥ ३१ ।

भूयोऽनुयुक्त इभवैरिपराक्रमोऽसौ
गर्व्वोद्धतं वचनमाददे इत्यभीकः ।
कस्त्वं किमर्थमनुयोगपरोऽसि भद्र !
न त्वं विचारकरणेऽधिकृतो नृपेण ? ॥ २२ ।
हेतुं निजानुमितिदार्ढ्यसमर्थकं * तत्
ओजस्वि तापसवचोऽस्तभयं निशम्य ।
हृष्टोऽन्वयुङ्क्त नृपतिः स्वयमेव तं तत्-
कान्तास्वरूपमनुवर्णयितुं यथावत् ॥ २३ ।
वर्षीयसी वलिमुखाभमुखी † विशीर्णा
या खिलिनी वलिमती सितकेशजाला ।
हस्तेन तीव्रविषयोव भुजङ्गयी या
संरचिता पिशितशून्यशरीरयष्टिः ;
दुर्गन्धदूषिततनुः पतिपादपद्मं
ध्यायन्त्यनारतमपास्तक्षपाक्षुधा च ।
पोतैकदेशमधितिष्ठति याद्य साधोः
सैषा मम प्रियतमा नृप ! चित्तभृङ्गी ॥२४,२५ ।
इत्युक्तवत्यखिल एव मुनौ सदस्याः
साट्टं जहास नृपतिं वणिजञ्च हित्वा ।
एकस्य ‡ वक्त्रनलिनं स्फुटतामगच्छत्
अन्यस्य नैगमपतेर्मलिनं बभूव ॥ २६ ।

---

* अयं न तापसः, किन्तु स श्रीदत्त एव वणिक्, अनुमितेः दृढतासम्पादकं हेतुं ओजस्वि वचनमिति तत् तापसवचः निशम्य पाइकः हृष्टो बभूव, नहि प्राकृतजनमुखात् ईदृशं वचः निःसरति ।

† वानरमुखी । 　　‡ एकस्य—पाइकराजस्य ।

उन्मत्तवत् प्रलपितं यदि तापसोऽसौ
चक्रे, तथापि वणिजोऽस्य विपक्षभावः ।
सन्दिग्धबुद्धिमकरोत् ननु मामितीत्थं
तस्मिन् विचिन्तयति सर्व्वसदस्यवर्गे ;
मत्प्राः स्वरूपमभिधेहि यथायथं द्राक्
किं तात ! विप्रलभसे श्वशुरं त्वमेवम्
वाक्ष्ये नृपे वदति चैवमपास्तधैर्य्यं
श्रीवत्सराज इति वाचमुवाच तथ्याम् ॥ ३७,३८ ।

प्रत्यक्षतां गतवती च यथोक्तरूपा
सा ते विकल्पमचिरात् निरसिष्यति श्राक् ।
निर्णीयतां प्रथममस्य दुरात्मनो वा
स्वर्णेष्टका मम हि या परिहृत्य देव ! ॥ ३९ ।

स्वर्णेष्टका दधति किं जठरे विचित्रं
पापो ब्रवीतु, परिभिद्य ततः समस्तम् ।
लोकं प्रदर्शयतु तत्, तत एव सर्व्वाः
स्टङ्क्षातु, यातु सदनं, नृप ! मां प्रशाधि ॥ ४० ।

ऐवञ्च तापसवचांस्यभिनन्द्य सर्व्वैः
द्राक् मोदितः स च वणिक् वचनं प्रपेदे ।
प्राग् भेदनात् कथमहं गदितुं क्षमः स्यां
पूर्व्वं भिनद्मि तत एव विशिष्य वक्ष्ये ॥ ४१ ।

साट्टहासत्यखिल एव सदस्यवर्गे
क्रुद्धे च वाड्नयती मुनिरावभाषे ।

बाढं, पुरा भवतु भेदनमेव, पश्चात्
साधुर्विमृश्य वदतां वर एष वक्तु ॥ ४२ ।
राजाज्ञया प्रवहृते स वणिक् छतास्त्री
भेत्तुं, सहस्रमपि तस्य परस्वधानाम् ।
रुग्नाग्रधारमभवत् तदपीष्टकानाम्
एकापि न प्रहृतिचिह्नविशेषितासीत् ॥ ४३ ।
तस्मिन् नृपे, "तव मुने ! किमिहास्ति सत्त्व-
निर्णायकं वद परिस्फुटमेव मानम्*" ।
उक्तेति तद्वदनसक्तदृशि स्थितेऽसौ
राजार्णि† विहस्य वचनं निजगाद नम्रः ॥ ४४ ।
प्रत्येकमेव कलधौतमयेष्टकानां
चिन्तेति वर्णयुगलेन विचित्रकुक्षि ।
पश्यन्तु देव ! सकला नु सदस्यलोकाः
विश्लिष्य बन्धनमहं परिदर्शयामि ॥ ४५ ।
सञ्जातकौतुकरसे परिदर्शनाय
तस्मिन् सदस्यनिवहे सहसोत्थितेऽसौ ।
एकैकशश्छलमुनिः परिभिद्य सर्वाः
स्वर्णेष्टकाः सपदि संशयमानुनोद‡ ॥ ४६ ।
तस्मिन् ह्रिया नतमुखे भयविह्वले द्राक्
राजाज्ञया वणिजि यन्त्रितपाणिपादे ।
प्रादुद्रुवत् बहुतिथः परिचारकस्तां
श्रीवत्सराजवनितां द्रुतमानिनीषुः ॥ ४७ ।

---

* मानम्—प्रमाणम् । † राजा—श्रीवत्स. । ‡ आनुनोद—चिच्छेद ।

प्राग्ज्योतिषेश्वरसुताग्रसरा चणेन
पश्चात् वलैरनुसृता धृतभासुरास्त्रैः ।
*आलोकिता जनगणैरुचितैक्षणैः सा
चिन्तानमत् समुपसृत्य यथोक्तरूपा ॥ ४८ ।

"चिन्ते ! स्वरूपमवलम्ब्य सदस्यवर्ग-
सन्देहमात्मविषयं नु निराकुरुष्व" ।
आज्ञापितेति रमणेन पतिव्रता सा
दध्यौ रविं मुदितनेत्रयुगोपविष्टा ॥ ४९ ।

उत्पत्य खं मिथुनमाशु भुजङ्गयोस्तत्
ज्योतिर्मयं वपुरधत्त सुदुर्निरीक्ष्यम् ।
चिन्ता च ता विकृतभीषणतां विहाय
नैसर्गिकं प्रकृतिसुन्दरमाप देहम् ॥ ५० ।

काषायवस्त्रपरिवीततनुः परीता
प्रत्यग्रपल्लवचयैररुणैः समन्तात् ।
सञ्चारिणी प्रसृतसौरभमुग्धभृङ्गा
वल्लीव वल्लभमसौ प्रणनाम चिन्ता ॥ ५१ ।

चिन्ता विलोक्य वणिजं तदवस्थमश्रु-
पूरार्द्रगण्डयुगलं नृपतिं न्यगादीत् ।
बद्धः किमेष वणिजां पतिरप्यदोष-
स्तूर्णं विमुक्तपरिबन्धन एष कार्यः ॥ ५२ ।

व्यामुग्धबुद्धिविभवः शनिनैष साधुः
नालं बभूव धनलोलुपतां निरोद्धुम् ।

तेनैव मे पतिमपातयदेव देवं ।
जानन्नमुं* कमपि नैगममम्बुधौ द्राक् ॥ ५३ ॥
मां त्वर्चयत् सुहृदमक्षिरसौ विजानन्
श्रीवत्सराजवनितेति हरोऽङ्गनावत् ।
महार्घगन्धमपहाय न गन्धमन्य-
ज्जग्राह पूतिमपि पङ्कजगन्धलुब्धा ॥ ५४ ॥
तन्मुच्यतामयमयञ्च ममानुरोधः
स्वर्णेष्टकाश्च कियतीः परिगृह्य यातु ।
इत्थं तया नृपवरो बहुशोऽनुरुद्धः
तन्मोचनानुमतिमन्वशिषत् प्रहृष्टः ॥ ५५ ॥
अत्रापि विस्मयपरैः प्रथितोद्धिकर्षैः
वाणी जनैरिति तदा विशदाशरीरा† ।
साहो ! परेद्यवि शनिः कमलाद्वितीयः
आस्थानमण्डपमुपैष्यति ते प्रसन्नः ॥ ५६ ॥
मायाश्च पुरा भिनत्ति सकलं तत्तद्रहस्यं श्री-
श्रीवत्सप्रतिबद्धमस्तकरणो यत् यत् व्यधत्त स्वयम् ।
यद्येनं नृपसत्तमं नय गृहं भार्याद्वयेनान्वितं
स्वर्गाग्र्योपचयात् धनेश महतो यत्नात् समायोजितम् ॥५७॥
इत्याकर्ण्य श्रवणसुभगां दैववाणीं स पाण्डु-
स्तं श्रीवत्सं धुम्नितपदैः प्रोणयन् स्तोत्रवाक्यैः ।

* अमुं—[illegible]
[illegible] ।
† [illegible] वाणी—दैववाणीदं ।

संहृष्टात्मा स्पृशति गगनं तूर्य्यनादे पुरोग-
स्चिन्ताभद्रानुसृतसरणिः* वेशयामास गेहम् ॥ ५८ ।

द्रुतमेहि कृतार्थय नेत्रयुगम्
पुरवासिनितम्ववतीनिवह !
अवतीर्णमहो रमया च गिरा
ननु पश्य हरिं हर चक्षुरघम् ॥ ५९ ।

इति वन्दिसुतात् प्रतिबोधमिताः
गृहकार्य्यमपास्य पदैस्त्वरितैः ।
अवलोकयितुं वरमीयुरथो
प्रतिराजपथं ललना विवशाः ॥ ६० ।

धिक् धिक् मूढे ! त्वरितगमने ! पालयस्वावहीनं†
क्रन्दन्तं स्वं तनयमबलं, संसृष्टाणोत्तरीयम् ।
उन्मत्ते ! त्वं निपतसि मुहुर्याहि धीरं, मदान्धे !
ग्रीवात् भ्रष्टं न मिपसि‡ कथं कर्णपूरं महार्घम् ॥ ६१ ।
धीवे ! लोकैर्गलितवसना लोक्यसे हस्यसे, तत्
काश्चित् कालं विरम गमनात् प्राहताङ्गी भवाद्य ।
रागाकृष्टे ! तरलहृदये ! मत्सरिस्वैकला त्वं
सन्दर्शार्थं किमिति कथयाहृतवातायनासि ? ६२ ।
सान्द्रानन्दे ! कियदतिस्पृहा पश्यसि त्वं ? तदाशु
प्रोम्मुक्ताक्षा भव, भवतु मे दर्शनाशा कृतार्था ।

* चिन्ताभद्रानुसृतसरणिं—चिन्ताभद्राभ्याम् अनुसृतपथम् ।
† अवहीनम्—त्वां तुच्छयेगमदुसर्तुमक्षमम् ।
‡ मिपसि—पश्यसि ।

दीर्घे नेत्रे वहसि न पुनर्लोकसे मां, पतन्ती
यन्मामेवं गुरुभरतनूभारखिन्नां करोषि ॥ ६३ ।
धन्या भद्रा निखिलनृपतीन् मन्यमाना तृणाय
प्रोन्मत्तेवाप्रतिहतगतिर्या तदा धिक्कृतापि ।
हीनावस्थं छलमुनिममुं मालया भर्त्तृभावे
वव्रे वत्सोरिव मधुरिपुं छद्मवेशेन गूढम् । ६४ ।
नारीजनैः पुरभवैः कथयद्भिरेवम्
आपीयमान इव नेत्रपुटैस्तदानीम् ।
आहूयमान इव भूषणशिञ्जितैर्द्राक्
यातः स कौतुकगृहं ललितोपचारम् ॥ ६५ ।

इति श्रीशीयत्सचरिते महाकाव्ये चिन्ताभद्रा-
योगो नाम एकविंशः सर्गः ।

---

समर्चितोऽसौ विधिवत् नृपेशं
समादिशत् सूर्यसुतः प्रसन्नः ।
पत्नीद्वयेनानुगतं दिदृक्षे
जामातरं ते, द्रुतमाह्वयैनम् ॥ ६ ।

इति ब्रुवाणे रविजन्मनि द्राक्
नृपाज्ञया तापसवेशधारी ।
युग्मेन पत्न्योरनुगम्यमानः
श्रीवत्सराजः सह आजगाम ॥ ७ ।

ततः शनिः प्राह विहस्य चिन्तां
कर्त्तव्यमूढेव किमेवमस्य ।
स्थितासि पत्नि ! ननु विश्वपूज्या
हरिप्रियेयं, सति ! पूजयैनाम् ॥ ८ ।

न विश्वपूज्यत्वमपैति लक्ष्म्या:
अपूजिताया अपि मूढमत्या ।
मया, शने ! भूषि कया दिशा ते
सम्माननं स्यात् महतो दयार्द्रः ॥ ९ ।

सुरासुराभ्यर्चितपादपद्मा
सेयं रमा, तादृश एव स त्वम् ।
विलोकयन्त्या पुनरागमं वाम्
आकम्पते मे हृदयं भयार्तम् ॥ १० ।

आकर्ण्य विस्तावचनं रमायां
लतान्वितस्नातरदच्छदायाम् ।

आमन्त्र्य सभ्यान् सकलान् प्रवक्तुं
　प्रचक्रमे सौरिरिति प्रसन्नः ॥ ११ ।
प्राधान्यमस्या मम वेति दृष्टो
　निष्पक्षपातो यदयं विचारे ।
अदर्शयत् कौशलमार्य्यवृत्तः
　तत् सर्व्वथा स्तुत्यमनन्यसाध्यम् ॥ १२ ।
सम्यग् विचारेपि यदकुर्ध द्राक्
　निरागसेऽस्मै, कदनञ्च भूरि ।
अकार्यमेतावत एव यस्मात्
　एतन्निदानं* ननु तत्र सभ्याः ! ॥ १३ ।
श्रीवत्सराजं पतिमाप्तुकामा
　भद्रावती नाम नृपात्मजेयम् ।
आराध्य भक्त्या चिरमप्रमत्ता
　प्रसादयामास हरस्य गौरीम् ॥ १४ ।
अस्यै प्रतिश्रुत्य तथेति कामं
　तारा समाहूय च मां न्यगादीत् ।
समागमेऽस्याः कुरु वत्स ! यत्नं
　श्रीवत्सराजेन नृपाङ्गजायाः ॥ १५ ।
प्रगाढ़रागः सखि चैत्रसेन्याम्
　चिन्ताद्वयायां पतिदेवतायाम् ।
दारान्तरं नैव च साधुवृत्तो
　यत्नोऽप्यतोऽस्यैवमपेक्षि वत्स ! ॥ १६ ।

---

* [illegible]

अंशोद्भवे द्वे अपि सिन्धुजाया:
चिन्तेयमेषा च नरेन्द्रपुत्रो ।
नारायणस्यांशसमुद्भवोयम्
श्रीवत्सराजो गुणरत्नसिन्धु: ॥ १७ ।

लक्ष्मीनिदेशात् स्वयमेव चिन्ता
पतिव्रतेयं पतिसंगताभूत् ।
भद्रावती मा गमदन्यनाथम्
इत्यत्र विष्णोरपि यत्न आसीत् ॥ १८ ।

तस्योपदेशाच्च रमेयमस्मिन्
साहायकं मे कुरुते स्म कार्य्ये ।
भद्रा निदानं ननु दुःखपाते
मूलञ्च सा तद्विनिवारणेपि ॥ १९ ।

विकारहेतावसति चितीश !*
सर्व्वेऽचलत्वं तत एव लोका: ।
"विकारहेतौ सति विक्रियन्ते
येषां न चेतांसि त एव धीरा:" ॥ २० ।

इति चितौ ते व्यसनेऽचलत्व-
प्रख्यापनायैव तथाविधं ते ।
अवेहि राजन् व्यसनोपपातं
मया कृतं विष्णुतिनिर्देशात्† ॥ २१ ।

त्वत्तस्य वीर्य्यस्य न तेऽपकर्षो
मया कृतस्तेन गणाधिपस्य ।

* चितीश !—हे भीपाल । † श्रीवत्स प्रति वक्तिरियम् ।

द्विषन्तपस्यास्य वचःसमीरैः
सन्धुचितक्रोधकृशानुराशेः ॥ २२ ।
आसीध युद्धेऽसिसहाय एव
कण्ठे गृहीतो विजयश्रिया त्वम् ।
मुष्ट्या विनिष्पिष्य च बाहुराजं
चिन्तामकार्षः प्रसभं तदानीम् ॥ २३ ।

निशम्य वाक्यं रविजस्य वाग्मी
सविस्मयं पश्यति तन्मुखाब्जम्,
चिन्ताकुलायाश्च नरेन्द्रपुत्र्यां
चिन्ताह्वयायां स्तिमितेक्षणायाम् ;
किमेष सौरिर्वदतीति भीत्या
परस्परं पश्यति सभ्यलोके,
सम्भाव्य भद्रा अलमन्यथैतत्
उक्ता शनिः प्रक्रमते स्म वक्तुम् ॥ २४, २५ ।

मन्मायया मोहित एष वाग्मी:
कण्ठे स्वयंग्राहनिषक्तबाहुम् ।
ददर्श चिन्तां परितो भ्रमन्तीं
समुद्रकूले नृपतिः कदाचित् ॥ २६ ।
दृष्ट्वा ज्वलत्कोपकृशानुरेव
मुष्ट्या विनिष्पिष्य च बाहुराजम् ।
धृतायुधैर्मल्लशतैः समन्तात्
संरक्षितां तामपि चैत्रसेनीम् ;

आच्छिद्य नीरे जलधेः पपात
मायामये आसितदर्पकौघः,
पतंश्च लक्ष्म्या विधृतोऽङ्कमध्ये
दयार्द्रया धन्वनि* घोरदर्पे ॥ २७, २८ ।
अस्याः श्रियः स्पर्शनिरस्तमोहः
प्रोन्मीलिताक्षः क्षितिपो ददर्श ।
स्थितं तदङ्के स्ववपुर्न चिन्तां
न चाम्बुधिं विस्मयनिघ्नचित्तः ॥ २९ ।
श्रुत्वा च वाङ्नृपतिर्विचिन्त्यो
जीवामि हन्तेति समुच्छ्वसन् सन् ।
श्रीवत्सराजं प्रति सत्कदृष्टिः
प्राह स्म धन्योऽस्मि भवत्प्रसादः ॥ ३० ।
इत्येवमुक्त्वा नृपतौ निवृत्ते
श्रीवत्ससामन्तर रवेस्तनूजः ।
परामृशन् पाणितलेन गात्रम्
जगाद भूयः परिसान्त्वनाय ॥ ३१ ।
नृपेष्टदेव्याः कमलापतेश्च
समाज्ञया त्वच्छुभकाम एषः ।
व्यधत्त यत्तेऽशुभमस्तरोषः
क्षमस्व तत् त्वं नृपचक्रवर्त्तिन् ॥ ३२ ।
प्रसादतो मे तव राजधानी
विराजते शक्रपुरीव राजन् ।

* धन्वनि—मरुस्थले ।

त्वदागमं यत्र समुत्सुकाः सन्
मतीक्षतेऽमात्यगणः सपौरः ॥ २३ ।
आशास्यभाग्योऽसि सुरैरपि त्वं
पतिव्रताभ्यां सुद्धर्मिणीभ्याम्।
चिन्तेति भद्रेति नृपालजाभ्यां
श्रिया गिरा विष्णुरिवासि यस्मात् ॥ २४ ।

तद्राजधानीं व्रज भूप ! तूर्णं
निरीतिरस्तव्यसनोपपातः।
अव्याहताज्ञः सुचिरं प्रशाधि
निरस्तशत्रुं क्षितिमापयोधि ॥ २५ ।
इति ब्रुवन्तं तमुवाच सौरिं
श्रीवत्सराजः प्रणिपत्य भक्त्या।
देवोप्यदोषेपि जनाय दुःखं
कुप्यन् ददात्यप्रतिकारघोरम्;
इत्येवमासीत् यदिय विघोरा
निर्भर्त्सिता मे शनिदेव ! देवे।
अस्तं गता साद्य, मनः स्थिरं मे
प्रसीद सवर्द्धय विष्णुभक्तिम् ॥ २६, २७ ।
प्रत्यग्रनीलोत्पलनीलकान्तो
रामा मदीये नयनाभिरामा।
तव प्रसादात् हृदये विभातु
विचित्रशक्तिर्मेनु विष्णुभक्तिः ॥ २८ ।

उत्थाप्य तं सौरिरुवाच साधो
भवादृशो यत्रनु मादृशानाम् ।
विरागपात्रं कृतदोष एव
भवेन्न, तत् साम्प्रतमिद्धबोध ! ॥ ३८ ।

निरागसे ते यदहं तदानीं
नृपाङ्कुशं तत् तव गौरवाय ।
आश्वास्य चैवं नृपतिं स चिन्तां
सम्बोध्य सौरिर्वच इत्यवोचत् ॥ ४० ।

कार्य्यानुरोधात् तनुगात्रि ! खेदम्
अखेदनीया गमितासि वत्से !
तस्मा व्यथिष्ठाः, मयि मापि कार्षीः
कोपं, चिरं तिष्ठ सुखं भगिन्या ॥ ४१ ।

भुजङ्गमल्लं प्रतिपद्य यस्याः
स्वचतुस्त्रं परिपूतमङ्गम् ।
उमामहेशौ, ननु पुत्रि ! तस्याः
किं गौरवं ते गदितुं चमेऽहम् ॥ ४२ ।

ततः प्रभावोपनतां स कन्यां
नयाविधां तां मणिहारयष्टिम् ।
प्रत्यर्पयामास बलात् छलाच्च
हृतां तदा प्राह च सौरिरेवम् ॥ ४३ ।

अनेन साधारणदुर्लभेन
ग्रैवेयकेण प्रतिभिन्नशोभा

अतर्क्यरूपा कथमस्त्ववाधम्
अज्ञातयासं नु निवत्स्यतीति ;
इयञ्च कन्या वसुभिर्मंहार्घैः
पूर्णानया ते न गतिः शुभाय !
इत्येवमन्यञ्च विचिन्त्य वत्से !
हृतं मया ते इयमेतदेव ॥ ४४, ४५ ।

प्रत्यर्पितन्यास इवास्मि सुखः
वरं वपुर्भूषय भूषणैस्त्वम् ।
चिराल्लता गच्छतु पुष्पयोगं
दृष्ट्वा मुदं द्रष्टृगणः प्रयातु ॥ ४६ ।

भद्रा ततः सा परिधाप्य भूषा
विभूषयामास निजं शरीरम् ।
वनिस्ततो राजपरिच्छदैस्तं
नृपं चकारोज्ज्वलवेशरम्यम् ॥ ४७ ।
विचित्रवेशं नृपतिं स वाहुः
सदस्यवर्गैरनुमोदितस्तम् ।
सिंहासनं मङ्गलवाद्यपूर्व्वम्
आरोपयामास सदारयुग्मम् ॥ ४८ ।
सान्निध्ययोगात् स्वयमेव लक्ष्म्याः
विह्वलक्ष्मीकमनल्पहर्षैः ।
प्रचक्रमे वक्तुमथैनमेवं
पुरःस्थितः कण्टकिताङ्गयष्टिः ॥ ४९ ।

जामातरं त्वां ननु विष्णुरूपं
लक्ष्मीस्वरूपां तनयाञ्च भद्राम् ।
अवाप्य लज्जे नहि तात ! चिन्ता:
दैत्यारिवक्षो: कमलाप्रसूतिः ॥ ५० ॥

राज्येन सार्द्धं तनयामिमां तत्
गृहाण मां याहय तत् समयम् ।
फलं नु पीयूषरसावधीरि
यत् सर्व्वथाश्रमसङ्गो गृहस्थैः ॥ ५१ ॥

धन्यो हि जामातरि वाथ पुत्रे
निधाय राज्यं खलु निर्वृतात्मा ।
तपोवनं संश्रयते सदारः
संसारदावानलतापशान्त्यै ॥ ५२ ॥

अस्तात ! मेनया सह पीतचित्तो
गृहाश्रयं प्रेम वनेषु बिभ्रत्
सुदुर्जये संक्रमयन् जयेच्छां
देहस्यशत्रौ करणाह्वयेऽहम् ;
गलायमं शान्तिनदीशनाथ
लोष्टेषु रत्नेषु समानुरागः ।
लब्धं यतिष्ये निरपायलाभा
तामग्रभूमिं तपसा यतात्मा ॥ ५३, ५४ ॥

ततः प्रफुल्लोत्पलसन्निभेऽसौ
चिन्ताकरे भूमिपतिर्निवेश्य ।

भद्राकरं तादृशशोभमेवं
प्राह स्म तां भद्रविधानकामः ॥ ५५ ।
निक्षेप एषा तव पुत्रि ! हस्ते
भद्रावती नाम कुलप्रतिष्ठा ।
त्वय्येव यस्यामपि सिन्धुजायाः
अंशोऽवतीर्णः शनिरित्यवोचत् ॥ ५६ ।
विजानता वो न जनेन शक्यो
भेदो विधातुं तिसृणां कथञ्चित् ।
नेत्रे निमेषः परमेव देहे
छाया विशेषप्रतिपत्तिहेतुः ॥ ५७ ।

प्राग्ज्योतिषेशो हृदयं मदीयं
या तस्य कन्या ननु सा ममापि,
इयं मदीया भगिनीति वत्से !
निक्षेप इत्यस्तविपक्षभावा ;
संकीर्णमार्गे भवकाननेऽस्तः
सत्कण्टके पिच्छिलभूमिभागे,
भव प्रदीपः पदविक्रमेऽस्याः
निरस्तनिःशेषतमोऽभिभूतिः ॥ ५८, ५९ ।

निगद्य चित्रां गलदश्रुपूरः
क्षितीश इत्थं निजगाद भद्राम् ।
भद्रे ! तवेयं भवसौख्यमूलं
मास्यां वह त्वं प्रतिपक्षभावम् ॥ ६० ।

इत्येवमुक्ता जनकेन भद्रा
चिन्वा च दीना रुदती प्रणम्य ।
न विस्मरिष्यास्युपदेशमित्थ-
मुक्त्वात्मनोऽत्यागमिमं* ययाचे ॥ ६१ ॥

तस्मै प्रतिश्रुत्य तथेति कामं
वाहौ स्थिते जातगुरुप्रहर्षः ।
श्रीवत्सराजः सहसोदतिष्ठत्
सिंहासनात् नोदित एव लक्ष्म्या ॥ ६२ ॥

पश्चाच्च श्वशुरसखः पुरक्रियाभि
र्योग्याभिः शमितपराजयव्यलीकान् ।
सम्प्रीतानमृतमयैर्विनीतवाक्यै
श्चक्रेऽसौ गणपपुरःसरान् नृपांस्तान् ॥ ६३ ॥

यद्देव ! प्रणतिनुतिक्रियाविनेयः
संरम्भो भवति भवादृशां, तदेतत् ।
अज्ञानात् कृतमपराधनं त्वया नः
सोढव्यं पदकमलस्पृशां शिरोभिः ॥ ६४ ॥

उक्त्वैवं नरपतयः प्रयाणकाले
सम्राजश्चरणयुगं सरोजमुग्धम् ।
बालार्कारुणरुचिभिः किरीटरत्नैः
श्चक्रुर्द्राक् प्रणतिपराः समिद्धरागम् ॥ ६५ ॥

---

* इमं पितरम् आत्मनः अत्यागं ययाचे अस्मान् विहाय मा वनं यासीः इति प्रार्थयामास इत्यर्थः ।

यातेषु स्वपुरनिवृत्तयेऽभ्यनुज्ञा-
.मासाद्य क्षितिपतिषु प्रहर्षितेषु ।
श्रीवत्सं शनिरवदत् प्रसन्नमूर्त्तिः
भूयस्तं श्रवणसमुत्सुकं नृसिंहम् ॥ ६६ ।

लोके राजन् श्रद्दधानो दुरितनिरसकं कीर्त्तयेद्यस्त्वेतत्
लोकातीतं विचित्रं चरितमुषसि वा कर्णयेत् कर्णपेयम् ।
दुर्भिक्षार्त्तिर्न मारीभयमपि न कदा पीड़नं तस्य सौरे
र्नेवासस्तोयतो वा नच हुतवहतोऽकालमृत्योश्च भीतिः ॥६७

जीवन्तो पुरुषायुषं सुखपरा सर्व्वर्द्धिसुस्था चिरं
त्वद्राज्ये प्रकृतिर्निरस्तनिखिलातङ्का नृप ! स्थास्यति ।
पर्जन्यः समये प्रवर्षति पुरा शस्यानुकूलं जलं
नित्यं भूमिरुपस्नुता तव गुणै रत्नानि दुग्धे स्वयम् ॥ ६८ ।

लक्ष्मीस्तं निजगाद सौरिवचने याते समाप्तिं ततो
यत् वेद्यं भवता तदेव विदितं तीर्णश्च शास्त्राम्बुधिः ।
तस्मात् नास्त्युपदेश्यमल्पमपि ते श्रीवत्स ! वत्साधुना
मातास्मीति तथापि वच्मि यदहं किञ्चित् तदाकर्ण्यताम्॥६९

दृशं जनानां श्रुतिमूलगामिनीं
सुदर्शनाञ्चापि तिरोदधत् भ्रमम् ।
अभागुभेत्य नवयौवनोद्भवं
विमोहनं यत् तिमिरं विजृम्भते* ॥ ७० ।

* यत् यस्मात् श्रुतिमूलगामिनी आकर्णविश्रान्ता पक्षे वेदमूलगामिनी सुदर्श-
शोभनदर्शना इतरपक्षे दर्शना नयना इव दृक् इति भ्रमं तिरोदधत् आच्छादयत् अभागुभे-
त्यवरेव निरवयुतमस्य विमोहनं मोहजनकं नवयौवनोद्भवं तिमिरं अन्धकार-
मोहरूपं अज्ञानं विजृम्भते प्रकाशते तस्मात् दुरूहरेव सौम्यम् ।

अमन्दगम्यो विषयोपभोगजो
विषप्रमोहो बलवान् दुरत्ययः।
प्रजायते रुद्धविवेकवैभवो
महीयसां तत्त्वविदामपीति यत्* ॥ ७१ ।
न दर्पदाहः शिशिरोपचारतः
प्रशाम्यते तात ! विभुत्वसम्भवः।
अहंकृतिव्याधिरवैद्यसाध्यतां
प्रयाति यत्† तत्‡ बहुधाभिधीयसे ॥ ७२ ।
राज्येऽभिषिक्तं नृपतिं नु पद्मा
पद्मानपत्रेण निषेवते च
तेनाहता द्राक् परलोकदृष्टि-
र्दृष्टेव सञ्जायत एव मन्ये ;
कृताभिषेको न नृपस्तदेनसो
बिभेति घोरात् नरकात् न मोषणात्।
जनापवादाच्च न वा शृणोत्यसौ
गुरूपदेशं न च मित्रभाषितम् ॥ ७३, ७४ ।
संहृत्ते पुरुषे जरत्यतितरां, खाभ्यः क्रियाभ्यः क्रमात्
व्यावृत्ते करणेऽखिले च न पुनर्भोगस्पृहा शाम्यति ।
सर्वाङ्गे शिथिलेऽप्यहो न भजते शैथिल्यमत्यल्पकम्
नृणां संसृतिबन्धनं, दृढतरं जायेत तत् प्रत्युत ॥ ७५ ।
दोषाहिर्व्यसनो दरो सुविपुला स्वर्भानुजिह्वा च सा
यागे धर्मविधौर्मी मगनदो क्रोधाग्यनकस्य च । •

* म्—यत्। † रत्—यत्। ‡ रत्—तत्।

घोरा येन भवन्तमन्यजनवत् भोगस्पृहा राक्षसी
सर्व्वग्रासमियं ग्रसेन्न, सततं रक्ष्यस्तथात्मा त्वया ॥ ७६ ।

मोहध्वान्ततिरोहितेक्षणयुगं जाने नवं यौवनं
राज्यश्चापरवञ्चनेन न विना संरक्ष्यते सर्व्वथा ।
तत् त्वं वत्स ! तथा यतस्व हि यथा नो निन्द्यसे साधुभिः
लोकैर्नो परिहस्यसे, न सखिभिः कामं तथा शोच्यसे ॥७७।

नोन्मत्तोक्रियसे मदेन, विषयैर्नाक्रम्यसे, वञ्च्यसे
धूर्त्तैर्नो, न विडम्ब्यसे विटजनैर्लक्ष्म्या न वा नर्त्त्यसे ।
रागैर्नो क्रियसे, नचापि भुजगैः सन्दश्यसे, लोभ्यसे
क्षोभिर्नो, शृणु धारयैतदखिलं गीतं वचः पण्डितैः ॥७८।

श्रीवत्स । गोविन्दपदारविन्द-
निष्यन्दसन्दोहविमुग्धभृङ्ग !
सेवस्व विप्रान् दृढभक्तिरेवम्
अवाप्स्यसि त्वं चरमे रमेशम् ॥ ७९ ।

यं चिन्तयन्नविरतं हृदये निधाय
गोविन्दमच्युतिमयं स हि विप्रजातिः ।
सन्धारयन्नुरसि पादसरोरुहाङ्कं
श्रीवत्स ! गौरवमवर्द्धयदेव लोके ॥ ८० ।

यो राजवर्चसमपास्य गतो द्विजत्वं
तं कौशिकं मुनिवरं परिपृच्छ गत्वा ।
युद्धे वशिष्ठमुनिना सह तस्य राज्ञः
कां ब्रह्मवर्चसमहो कृतवत् न हानिम् ॥ ८१ ।

किं वारिभिः सततधारपतद्भिरभ्रात्
विप्रस्य रोषहुतभुक् यदि धुचितः स्यात्।
सर्व्वात्मना ननु यतस्व निवारणार्थम्
वंशप्रदाहमवधारितमेव विद्धि ॥ ८२।

यो धुचयत्यखिलदाहपटुं द्विजाग्निम्
सोऽगाधमर्णवजलं विशतु प्रकामम्।
गच्छत्वसौ हिममयेप्यथवेन्दुलोके
तस्य प्रदाहमवधारितमेव विद्धि ॥ ८३।

विप्रो यद्यपि पूजितः किमु तदा स्वाराधितैर्दैवतैः
भक्तिर्यद्यपि भूसुरे किमु तदा भक्त्या हरौ गाढ़या।
यस्मै कुप्यति विप्रजातिरवनौ श्रीवत्स! गोविन्दतः
तत्त्राणं न हि, चिन्तयेति ननु तत् तां सर्व्वथा तोषय ॥८४।

इत्युक्त्वा शनिना प्रदर्शितपथा कृच्छ्रादविष्टा क्रमात्
श्रीवत्सेन सबाहुकेन रुदता तादृग्दशापन्नया।
आश्लिष्टा सहभद्रया दृढ़तरं देव्या च चिन्ताख्यया
सा लक्ष्मीरधिरुह्य पुष्पकरथं वैकुण्ठलोकं गता ॥ ८५।

श्रीवत्सः सहधर्म्मिणीद्वयमितो हृष्टान्तरात्मानयत्
तिष्ठन् सौतिपुरे महेन महता कालं कियन्तं ततः।
चिन्तायाः पितुरालये च कियतो घस्रान् मुदा यापयन्
यातः काष्ठिकसद्म, यत्र वसति स्माज्ञातवासं पुरा ॥ ८६।

पश्यन्तो रमणीयुतं सुमुदिरे तं काष्ठिकास्तत्क्षणे
ऽनाहत्या परिपीड़िता इव जना मेघं तड़िद्दृष्टिम्।

सस्तोकः स हि भूपतिः परिक्लिश्यानाश्वास्य तान् सर्वथा
सम्पत्त्यातुलया निनाय सुहृदत् सामाजिकं गौरवम् ॥८७।
पश्चात् स्वां राजधानीं शनिवरजनितोत्कर्षलक्ष्मीप्रकर्षां
चिन्ताभद्राधमितः पुरजननिवहैर्हर्षसफुल्लनेत्रैः ।
प्रत्युद्यातः समन्तात् रसति च पटहे वैजयन्तीसनाथा
प्राविशत् मन्त्रिवर्गैः पुलकिततनुभिर्दर्शिताध्वा पुरोगैः ॥८८।
कस्त्वं ? नागरिकः, कुतः पुनरिह ? श्रीवत्सराज्यात् सखे !
किं तत्रास्ति जगद्विलक्षणमहो ? निष्कण्टकं वारिजम् ।
नित्यं वीतभयो विधुर्विधुरिपोः पूर्णः सदा राजते ;
कीदृक् तस्करता ? श्रुतौ परमियम्,श्रुत्वाहसत् तस्करः॥८९
कासारो* वसुना† निजेन ह्रपितान् पान्थानिवाप्यायत
श्रीवत्सः, स इव प्रशस्ततरैस्तीर्थैः‡ समालङ्कृतः ।
भेदस्त्वेष तदोभयोः समभवत् हंसो बकः सञ्चरन्
स्व रूप भजते ह्यमुत्र, नृपतौ तौ द्वौ गतौ हंसताम् ॥९०।

इति श्रीश्रीवत्सचरिते महाकाव्ये प्रसन्नशनैश्चरो नाम द्वाविंशः सर्गः ।

समाप्तोऽयं ग्रन्थः ।

402

---

* कासार — सरोवर ।  † वसुना — धनेन वह्निना च ।
‡ तीर्थ — सोपाने धर्मार्थादिषु ।

